॥*॥ यत्र च नियुक्तस्तत्र चोपसङ्ख्यानं कर्तव्यम्। छत्रधारः द्वारपालः। ॥*॥हृग्रहिनीवहिभ्यश्च॥*॥हृग्रहिनीवहिभ्यश्चेति वक्तव्यम्। हृ–भारहारः[हृ]। ग्रहि–कमण्डलुग्राहः। [ग्रहि]॥ नी—उष्ट्रप्रणाय:॥[ [1]नी ] वहि–भारवाहः। ॥*॥ अपरिगणनं वा ॥*॥न वाऽर्थः परिगणनेन ॥ कस्मान्न भवति–आदित्यं पश्यति हिमवन्तं शृणोति ग्रामं गच्छतीति ?॥॥*॥ अनभिधानात् ॥*॥ अनभिधानादेव न[2] भविष्यति ॥*॥ अकारादनुपपदात्कर्मोपपदो विप्रतिषेधेन ॥*॥ अकारादनुपपदात्कर्मोपपदो भवति विप्रतिषेधेन। अनुपपदस्यावकाशः–पचतीति पचः। कर्मोपपदस्याऽवकाशः कुम्भकारः–नगरकारः। ओदनपाच[4] उभयंप्राप्नोति। कर्मोपपदो भवति विप्रतिषेधेन।अनुपपदस्यावकाशः–विक्षिपः विलिखः। कर्मोपपदस्य स एव। काष्ठभेद[5] उभयं प्राप्नोति। कर्मोपपदो

प्र.]तत्प्राप्यमिति कथ्यते'॥इति॥ तत्र प्राप्यत्वं सर्वस्य कर्मणोऽस्तिक्रियया प्राप्यमाणत्वात्।अवान्तरविवक्षायां तु त्रैविध्यमुच्यते। वेदाध्याय इति।नित्यो वेदः स्थित एवाधीयते इति निर्वर्त्यत्वाऽभावः। छत्रधार इति। वेदाध्यायादिग्रहणेन च्छत्रधारादीनां ग्रहणं नास्ति,प्रकारार्थेनाऽऽदिशब्देन सदृशानां शास्त्राध्यायादीनामेव शब्दानां ग्रहणात्। तत्प्राप्यमेव न विकार्यम्। नहि धारणादूर्ध्वं छत्रस्य कश्चित् क्रियाकृतो विशेषः प्रत्यक्षानुमानपरिच्छेद्योऽस्ति। अनभिधानादिति। नित्यानां शब्दानामिदमन्वाख्यानमात्रम्। न चादित्यं पश्यतीत्याद्यर्थप्रतिपादनायादित्यदर्शादयः शब्दा लोके प्रयुज्यन्त इति शास्त्रेणापि साधुत्वेन नाऽनुशास्यन्त[6] इत्यर्थः। कर्मोपपदस्येति। यदा गणपठितधातुविषय एवाऽच्प्रत्ययस्तदायं विप्रतिषेधो यदा तु सर्वधातुविषयोऽच्प्रत्ययस्तदा येन नाप्राप्तिन्यायादण्प्रत्ययस्यापवादत्वादुत्सर्गापवादयोर्विप्रतिषेधोनुपपन्नः। तथा च करोतेरच्प्रत्ययः कृतः 'शिवशमरिष्टस्य कर' इति। ततश्च कुम्भकारादिरपि नाऽणोऽवकाशः, तत्राप्यच्प्रत्ययप्रसङ्गात्। अत एव भाष्यकार

उ.]स्वर्णं कुण्डलं करोति,काष्ठं भस्म करोति। अनुमानाद्यथा–पुत्रः सुखं करोतीति। अत्र सुखरूपलाभो मुखप्रसादाऽनुमेयः। नित्यः। तत्तत्कल्पेऽविच्छिन्नपारम्पर्य इत्यर्थः। ननु 'वेदाऽध्यायादी'नामित्यादिनैव सर्वसङ्ग्रहे सिद्धे 'यत्र च नियुक्त' इत्यादेर्वैयर्थ्यमत आह–वेदाऽध्यायादीनामिति। वस्तुतः प्रपञ्चार्थमेव तानीति बोध्यम्। शास्त्रेणाऽपि–'कर्मण्य'णिति सामान्यशास्त्रेणापि। ननु सर्वधातुभ्योऽज्विधानेन 'कुम्भकार' इति कथमणोऽवकाश इत्यत आह–यदेति। सर्वधातुविषयश्चाऽच्प्रत्यय आवश्यक इत्याह–तथा चेति। उदाहरणान्तराणि–काऽण्विषयाणि॥

१ अयं पाठः क्वचिन्न। २ 'परि'। ३ 'दत्र' 'देवात्र'। ४ 'इहोभयं प्राप्नोति-ओदनपाचः'। ५ 'इहोभयं प्राप्नोति–काष्ठभेदः'। ६ 'नुशास्यन्त'।

भवति विप्रतिषेधेन। अनुपपदस्यावकाशः–जानातीति ज्ञः। कर्मोपपदस्य स एव। इहोभयं प्राप्नोति–अर्थज्ञः[1]। कर्मोपपदो भवति विप्रतिषेधेन॥

नैष युक्तो विप्रतिषेधः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां णः। णस्य[2] कः। स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत॥कर्मोपपदोऽपि तृतीयः। ण्वुल्तृजचः। तेषामण्। अणः कः। उभयोस्तृतीययोर्युक्तो विप्रतिषेधः॥ अनुपपदस्यावकाशः–लिम्पतीति लिम्पः। कर्मोपपदस्य स एव॥ कुड्यलेप[3] उभयं प्राप्नोति। कर्मोपपदो भवति विप्रतिषेधेन॥ नैष युक्तो विप्रतिषेधः। अनुपपदस्तृतीयः। ण्वुल्तृजचः। तेषां कः। कस्य शः। स यथैव शः[4] कं बाधते एवं कर्मोपपदमपि बाधेत॥ का तर्हि गतिः?॥ 'मध्येऽपवादाः पूर्वान् विधीन्बाधन्ते [नोत्तरा'न्] इत्येवं शः कं बाधिष्यते कर्मोप-

प्र.]उदाहरणान्तराणि काष्ठभेदादीनि विप्रतिषेधस्य वक्ष्यति। **काष्ठभेद इति।** सर्वधातुभ्यो विधानादच उत्सर्गस्य काऽणावपवादौ तयोर्विप्रतिषेधादणेवात्र भवति। **स यथैव क इति।** प्राप्तिमात्रस्य बाध्यत्वमपेक्ष्यैतदुच्यते। यदा तु प्राप्तिविशेषोऽपेक्ष्यते तदा तु येन नाप्राप्तिन्यायाणस्यैव को बाधको न तु कर्मोपपदस्याऽणः। कः

उ.] काऽणाविति। 'इगुपधे'ति कः। 'कर्मण्यण्'। भाष्ये–**अर्थज्ञः कर्मोपपद इति।** विप्रतिषेधेन प्राप्तमणं बाधित्वा 'आतोऽनुपसर्गे' इति 'क' इति तात्पर्यम्।

ए[वं]तत्तात्पर्यमजानान एकदेश्याह–**नैष युक्त इति।** ज्ञाविषये काऽणोर्य इत्यर्थः। **तेषां ण इति।** 'श्याव्यधे'ति विहितः। तत्र हि 'श्या–आदि'ति च्छेदः। **स यथैवेति।** बाध्यसामान्यचिन्तयाऽणोऽपि स बाधक इत्यर्थः सिद्धो विप्रतिषेधं विनाऽपीत्यर्थः। तदाह–**प्राप्तिमात्रस्येति। न तु कर्मोपपदस्येति।** एवञ्च विप्रतिषेधो युक्त एवेति भावः। नन्वर्थज्ञ इत्यत्राऽणं विधातुं न 'क'प्रत्ययेन विप्रतिषेध उच्यते किन्तु 'आतोऽनुपसर्गे क' इति कं विधातुम्। एवञ्च 'इगुपधे'ति कस्याऽणा बाधेऽप्यातोऽनुपसर्ग इति केन तृतीयकक्ष्याप्राप्तस्येगुपधेति कस्य विप्रतिषेधः सम्भवत्येवेत्याह सिद्धान्त्येकदेशी–**कर्मोपपदोऽपीति। अणः क इति।** 'आतोऽनुपसर्ग' इत्ययमिति भावः। **उभयोरिति।** सोपपदनिरुपपदयोः कयोरित्यर्थः। **कर्मोपपदस्य कस्य विषय इति।** अनाकारान्तत्वादिति भावः। किन्तु 'गोद' इत्यवकाश इति वक्तुं युक्तमिति तात्पर्यम्। **क्रममादत्येति।** 'अर्थज्ञः कर्मोपपदो भवति विप्रतिषेधेने'त्युत्तरं 'नैष युक्त' इत्यादि'युक्तो विप्रतिषेध'इत्यन्तं भाष्यन्त्वेकदेश्युक्तिरित्युक्तमेव। अथ विप्रतिषेधस्योदाहरणान्तरमाह–**अनुपपदस्येत्यादिना।** भाष्ये–**का तर्हि गतिरिति** तृतीयस्य प्रश्नः। समासे पूर्वपद-

१ 'अर्थज्ञ उभयं प्राप्नोति'।२ 'तस्य'।३'इहोभयं प्राप्नोति कुड्यलेपः'।४'कः शं'।

पदं न बाधिष्यते ॥ अनुपपदस्यावकाशः–सुग्लः सुम्लः । कर्मोपपदस्य स एव । इहोभयं प्राप्नोति[1]–गोसंदायः वडवासंदायः । कर्मोपपदो भवति विप्रतिषेधेन ॥ नैष युक्तो विप्रतिषेधः । अनुपपदस्तृतीयः । ण्वुल्तृजचः । तेषां णः । णस्य कः । स यथैव को णं बाधते एवं कर्मोपपदमपि बाधेत ॥ का तर्हि गतिः ? ॥ पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते [ नोत्तरान्[2] ] इत्येवमयं को णं बाधिष्यते कर्मोपपदं न बाधिष्यते ॥*॥ शीलिकामिभक्ष्याचरिभ्यो णः, पूर्वपदप्रकृतिस्वरं च ॥*॥ शीलिकामिभक्ष्याचरिभ्यो णो वक्तव्यः,पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम् । शीलि–मांसशीलः,मांसशीला । शीलि[3] ॥कामि–मांसकामः मांसकामा । कामि ॥ भक्षि–मांसभक्षः मांसभक्षा ॥ भक्षि ॥ आचरि—कल्याणाचारः कल्याणाचारा ॥—॥*॥ ईक्षिक्षमिभ्यां च ॥*॥ ईक्षिक्षमिभ्यां चेति वक्तव्यम् । सुखप्रतीक्षः सुखप्रतीक्षा । कल्याणक्षमः॥ कल्याणक्षमा॥ किमर्थमिदमुच्यते?॥ पूर्वपदप्रकृतिस्वरत्वञ्च वक्ष्यामि, ईकारश्च मा भूदिति ॥ नैतदस्ति प्रयोजनम् । इह यो मांसं भक्षयति मांसं तस्य भक्षो भवति । [तत्र] योऽसौ भक्षयतेरच्तदन्तेन बहुव्रीहिः॥ एवं तर्हि सिद्धे सति यत्कर्मोपपदं णं शास्ति तज्ज्ञापयत्याचार्यः 'समानेऽर्थे केवलं विग्रह-

---

प्र.]पुनरनयोः प्रत्यययोर्विशेषः?। उच्यते। कर्मोपपदे के सति नित्यसमासो भवति । अकर्मोपपदे तु विकल्पेन षष्ठीसमासः स्यात् । नन्वर्थज्ञ इत्यत्रातोऽनुपसर्गे क इति कः प्राप्नोति न त्वण्प्रत्ययः,तत्कथमुच्यते 'कर्मोपपदस्य स एवे'ति,न हि कुम्भकारः कर्मोपपदस्य कस्य विषयः।एवं तर्हि काऽणोर्विप्रतिषेधे परत्वादण् कं बाधते,अणमपि कर्मोपपदः कोऽपवादत्वादिति क्रममादृत्यैतदुक्तमित्यदोषः । मांसकाम इति । मांसशब्दः'स'प्रत्ययान्तोऽन्तोदात्तः। कल्याणशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरु'-रिति मध्योदात्तस्तत्र कृदुत्तरपदप्रकृतिस्वरे प्राप्ते पूर्वपदप्रकृतिस्वरो विधीयते ।

भक्षयतेरजिति।'एरजण्यन्ताना'मित्येतत्तु मुनित्रयस्य मते नास्ति।कल्प्यादिभ्यः?

---

उ.]प्रकृतिस्वरत्वं दर्शयितुं पूर्वपदस्वरान्दर्शयति–मांसेति । 'एकस्मिन्नन्ते लघौ द्वयोर्वाऽन्तयोर्लघ्वोः सतोर्बह्वषः बह्वच्कस्ये'त्यर्थः । भाष्ये–ईकारश्च माभूदिति । अतो णः कृत इति भावः । मांसं तस्य भक्ष इति । भक्षेः कर्मण्यच् । 'घञजपाः पुंसि' इति नित्यं पुंस्त्वम् । एतेन 'इदं भावघञ्विषयमेवे'त्यपास्तम् । भक्षणं भक्ष इति।भावेऽजिति भावः। कर्माऽजन्तेन समानाधिकरणबहुव्रीहिस्तु नाऽनभिधानात् । तच्च तवाऽप्यावश्यकमिति बोध्यम् । भाष्ये तज्ज्ञापयत्याचार्य इति । नन्वणि सति 'मांसभक्षी'ति प्रयोगः स्यादिति तद्वारणेन चरितार्थं वार्तिकं

---

१ 'वडवासंदाय उभयं प्राप्नोति'।'गोसंदाये उभयं'।२ इदं क्वचिन्न ।३ चः क्वचिन्न ।

भेदाद्यत्र कर्मोपपदश्च प्राप्नोति बहुव्रीहिश्च, कर्मोपपदस्तत्र भवती'ति॥

किमेतस्य ज्ञापने प्रयोजनम्?॥काण्डलावः शरलावः[1]।काण्डानि लावोऽस्येति बहुव्रीहिर्न भवति॥भवति[तु]बहुव्रीहिरपि,-मांसे कामोऽस्य मांसकामः, मांसकामक इति वा ॥*॥ न त्वम्भोऽभिगमा[2] ॥*॥ न त्विदं भवति अम्भोऽभिगमोऽस्या [अम्भोभिगमा] इति॥ किं तर्हि?॥ अम्भोभिगामीत्येव भवति। काण्डलावेऽपि च विग्रहाऽभावान्न ज्ञापकस्य प्रयोजनं भवतीति ॥ नैषोऽस्ति विग्रहः-काण्डानि लावोऽस्येति ॥*॥ अन्नादायेति च कृतां व्यत्ययश्छन्दसि॥*॥ अन्नादायेति च कृतां व्यत्ययश्छन्दसि द्रष्टव्यः।अन्नादायाऽन्नपतये य आहुतिमन्नादीं[3] कृत्वा ॥ [ कर्मण्यण् ] ॥

## आतोऽनुपसर्गे कः ॥ ३।२।३ ॥

॥*॥ कविधौ सर्वत्र प्रसारणिभ्यो डः ॥*॥ कविधौ सर्वत्र प्रसारणिभ्यो

---

प्र.]प्रतिषेध एवास्ति । ननु च बहुव्रीहौ सति बहवो भक्षा अस्य बहुभक्ष इत्यत्र 'बहोर्नञ्वदुत्तरपदभूम्नी'त्यन्तोदात्तत्वं प्राप्नोतीति पूर्वपदप्रकृतिस्वरो न सिध्यति । नैष दोषः । भक्षणं भक्षः, बहुषु भक्षोऽस्येत्येवं व्यधिकरणपदो बहुव्रीहिः करिष्यते । तत्रोत्तरपदभूमाऽभावाद्बहुव्रीहौ प्रकृत्येति स्वरो भविष्यति। काण्डानि लावोऽस्येति। लावयतेरच् [प्रत्ययः]।भवति बहुव्रीहिरपीति।तेन ज्ञापनस्य प्रयोजनाऽभावदण्बाधनार्थमेवेदं वक्तव्यमित्यर्थः । न त्वम्भोभिगमेति । तेनाऽत्रानभिधानाद्बहुव्रीहिर्न भवतीति भावः । नैषोस्तीति । काण्डानि लुनातीति प्रकृत्यर्थविवक्षायामभावाण्णिचः । लूयत इति लवः, काण्डानि लवोऽस्येति विग्रहेण भाव्यमिति भावः। अन्नादायेति । अन्नमत्तीत्यणः प्रसङ्गेऽच्प्रत्ययः क्रियते । तेनान्न अदायेत्येवमवग्रह उपपद्यते ॥

---

उ.]कथं ज्ञापकमिति चेत् ,अनभिधानादणभावं मन्यते।लावयतेरच्प्रत्यय इति।निवृत्तप्रेषणप्रकृतिकप्राकृतार्थणिजन्तादच्प्रत्यय इत्यर्थः । अन्यथा 'काण्डानि लुनाती'त्यनेन समानार्थत्वं न स्यात् 'काण्डानि लाव' इत्यत्र 'लाव' इति जातावेकवचनं बोध्यम्। अण्बाधनार्थमेवेति। अनभिधानेन प्रत्याख्यानन्तु न चमत्कारीति भावः ।

भाष्ये-न त्वम्भोऽभिगमेति।अम्भोऽभिगमा तु नेष्यते,तस्मादनभिधानमेव तदर्थमाश्रयणीयम्, नत्वेकप्रयोजनार्थं सामान्यज्ञापकाश्रयणमिति भावः । लूयत इति लव इति । न च निवृत्तप्रेरणादिति प्रागुक्तरीत्या तदर्थो लावशब्दोऽप्यस्तीति वाच्यं, सा हि कल्पना क्वचिदिष्टप्रयोगसिद्धये न त्वनिष्टायेति भावः । चतुर्थ्यन्तप्रयोगे एव व्यत्ययोक्तेस्तत्राऽविशेषोऽणचोरत आह-अवग्रह इति । 'न लक्षणेन पदकारा अनुवर्त्त्या' इत्यादि भाष्येणाऽवग्रहार्थताया लक्षणस्य दूषितत्वादिदं व्यर्थ-

---

१ इदं क्वचिन्न । २ इदं भाष्यवार्त्तिकमित्यन्ये । ३ 'मन्नादां हुत्वा' ।

ङो वक्तव्यः । ब्रह्मज्य इति ॥ किमुच्यते सर्वत्रेति ?॥ अन्यत्रापि नावश्यमिहैव ॥ क्वाऽन्यत्र ?॥ आह्वः प्रह्व इति॥*॥के हि संप्रसारणप्रसङ्गः॥*॥ के हि सति संप्रसारणं प्रसज्येत । संप्रसारणे कृते संप्रसारण[2]परपूर्वत्वे चोवङादेश 'आहुव' इत्येतद्रूपं [3]प्रसज्येत॥स तर्हि वक्तव्यः?॥न वक्तव्यः। अस्त्वत्र संप्रसारणं, संप्रसारणे कृते आकार लोपस्तस्य स्थानिवद्भावादुवङ[4]ादेशो न भविष्यति ॥ पूर्वत्वे कृते प्राप्नोति॥ एवन्तर्हीदमिह सम्प्रधार्यम् आकारलोपः क्रियतां पूर्वत्वमिति, किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोपः॥ न सिध्यति । अन्तरङ्गत्वात्पूर्वत्वं प्राप्नोति ॥ एवं तर्हि वार्णादाङ्गं बलीयो भवतीत्या[5]कारलोपो भविष्यति ॥ एवं तर्हीदमिह संप्रधार्यम् आकारलोपः क्रियतां संप्रसारणमिति किमत्र कर्तव्यम् ? ॥ परत्वादाकारलोपः ॥ नित्यं संप्रसारणं । कृतेऽप्याकारलोपे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ आकारलोपोऽपि नित्यः। कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति ।। अनित्य आकारलोपः, न हि कृते संप्रसारणे प्राप्नोति। अन्तरङ्गं[हि[4]]पूर्वत्वं बाधते। यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥ न च संप्रसारणमेवाकारलोपस्य निमत्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादाकारलोपः । आकारलोपे कृते संप्रस[5]ारणं। संप्रसारणे कृते यणादेशेन सिद्धं रूपम्–आह्वः प्रह्व इति ॥ एवमपि न सिध्यति । योऽनादिष्टादचः पूर्वस्तस्य विधिं प्रति स्थानिवद्भावः ।

प्र.]आतोऽनुपस॥ ब्रह्मज्य इति ।ब्रह्म जिनातीति डप्रत्ययः। 'वार्णादाङ्गंबलीय' इत्युक्ते यो ब्रूया'त्समानाश्रयाङ्गवार्णविषयमेत'दिति,तं प्रत्याह–एवं तर्हीति । नित्यमिति ।संप्रसारणे कृते पूर्वत्वेन भाव्यमित्याकारलोपस्याऽनित्यत्वं मन्यते ।अन्तरङ्गमिति। 'वार्णादाङ्गं बलीय' इत्येतत्तु समानाश्रयविषयमेवेत्युक्तम् । एवमपि न सिध्यतीति । 'आह्व इत्यादिरूप'मिति शेषः । योऽनादिष्टादिति । उकारश्चानादिष्टा-

उ.]मित्यनेन सूचितम् ॥ [ कर्मण्यण् ] ॥

आतोऽनुपसर्गे॥ प्रसारणिनः–संप्रसारणभाजः। ब्रह्मज्य इति। के हि सम्प्रसारणे इयङ् स्यादिति भावः । भाष्ये–किमुच्यते सर्वत्रेति । सर्वत्रेत्यस्य 'क' मात्रे इत्यर्थः । तमाह–अन्यत्राऽपीति । 'आतश्चोपसर्गे' इत्यत्राऽपीत्यर्थः । एवन्तर्हि वार्णादिति । 'इयाये'त्यादिसिद्धयेऽस्या विभिन्ननिमित्तकेऽपि प्रवृत्तिरावश्यकीति भावः । समानाश्रयेति । 'तदनाश्रयणेऽप्याहे'ति वक्तुमुचितम् । एवञ्च 'एवन्तर्ही'ति 'किञ्चे'त्यर्थकमिति भावः । भाष्ये–अन्तरङ्गं पूर्वत्वमिति । यद्यपि वार्णपरिभाषयाऽपि आल्लोपस्य नित्यत्वं वक्तुं शक्यन्तथापि तदनाश्रयणेन[6]ाऽस्य

१ इतिः क्वचिन्न।२ 'णस्य पूर्व'।३'स्यात्'।४ क्वचिन्न। ५ 'यमित्यु'। ६ नैवाऽस्य।

आदिष्टाच्चैषोऽचः पूर्वो भवतीति[1]॥ एवं तर्हि आकारलोपस्याऽसिद्धत्वादुवङा-देशो न भविष्यति ॥ इहापि तर्ह्याकारलोपस्याऽसिद्धत्वादुवङादेशो न स्यात् जुहुवतुः जुहुवुरिति॥ अस्त्यत्र विशेषः,-अकृतेऽत्राऽत्वे पूर्वत्वं भवति ॥ इद-मिह संप्रधार्यम्-आत्वं क्रियतां पूर्वत्वमिति,-किमत्र[2] कर्तव्यम्?॥ परत्वात्पूर्व-त्वम् ॥ न सिध्यति । अन्तरङ्गत्वादात्वं प्राप्नोति ॥ एवं तर्हीदमिह संप्रधा-र्यम् , आत्वं क्रियतां संप्रसारणमिति, किमत्र कर्तव्यम् ?॥ परत्वादात्वम् ॥ नित्यं संप्रसारणं । कृतेप्यात्वे प्राप्नोत्यकृतेऽपि ॥ आत्वमपि नित्यम् । कृतेऽपि संप्रसारणे प्राप्नोत्यकृतेऽपि प्राप्नोति ॥ अनित्यमात्वम् । नहि कृते संप्रसा-रणे प्राप्नोति, परत्वात्पूर्वत्वेन भवितव्यम्॥ यस्य लक्षणान्तरेण निमित्तं विह-न्यते न तदनित्यम् ॥ न च संप्रसारणमेवात्वस्य निमित्तं विहन्ति । अवश्यं लक्षणान्तरं पूर्वत्वं प्रतीक्ष्यम् । उभयोर्नित्ययोः परत्वादात्वम्,आत्वे कृते संप्र-सारणम् ॥ एवं तर्हि पूर्वत्वे योगविभागः करिष्यते—[ 'संप्रसारणात्' ]।

---

प्र.]दचः पूर्वो न भवति। नन्वनादिष्टादचः पूर्वो वकार इति तदादेशस्यापि स्थानि-वद्भावादनादिष्टादचः पूर्वत्वं भविष्यति । नैतदस्ति । शास्त्रीयकार्यसिद्धये स्थानि-वद्भावो विधीयते न त्वनादिष्टादचः पूर्वत्वे लौकिके। आकारलोपस्यासिद्धत्वा-दिति । 'असिद्धवदत्राऽभा'दित्यनेनेति भावः । जुहुवतुरिति । ह्वेञो लिटि 'ह्वः संप्रसारणमभ्यस्तस्य चे'ति संप्रसारणे रूपम् । परत्वादात्वमिति । 'अशिती'ति पर्युदासाश्रयेणैतदुक्तं । प्रसज्यप्रतिषेधे त्वनैमित्तिकत्वादात्वमन्तरङ्गं, न चाऽन्त-रङ्गबहिरङ्गयोर्युक्तो विप्रतिषेधः। एवं तर्हीति । 'एङः पदान्तादती'त्ययं योगो विभ-

---

उ.]ग्रन्थस्य प्रवृत्तेर्न दोषः। प्रकारान्तरेण तदुपपादयितुमाह-यस्येति। नन्वनादि-ष्टादच इति । अत एव 'न पदान्त'सूत्रस्थ'सवर्ण'ग्रहणं भगवता प्रत्याख्यातम् । 'न धातु'सूत्रस्थं भाष्यन्तु तत्रैव योजितमिति न तद्विरोध इति बोध्यम् । समा-धानान्तरस्य सम्भवादनित्यमिदं नाश्रितमिति तत्त्वम् । 'हु'धातुना सिद्धमिदं रूप-मत आह-ह्वेञ इति । 'वार्णादाङ्गं बलीय' इति पूर्वरूपं बाधित्वा लोप इति पक्षेऽ-प्यस्याऽसिद्धिर्बोध्या। भाष्ये-अन्तरङ्गत्वादात्त्वमिति। एवञ्चाऽऽत्वे पूर्वरूपलोपयोः प्राप्तयोर्वार्णादिति न्यायेन लोपे तस्य स्थानिवत्त्वादुवङ् स्यादिति भावः । एवन्तर्हीति प्राग्वदेव किञ्चेत्यर्थे । प्रसज्यप्रतिषेधे त्विति । 'वचिस्वपी'त्यत्र कितीत्यपि यदि विषयसप्तमी तदा भाष्यं सम्यगेव । भाष्ये-आत्त्वे कृते सम्प्रसारणमिति । आत्त्वे कृते लोपे कृते सम्प्रसारणे कृते प्राप्तोवङि स्थानिवत्त्वाऽभावेऽप्यसिद्धत्वादुव-ङोऽसिद्धिरिति भावः । समाधत्ते-एवन्तर्हीति । योगविभागसामर्थ्यादन्तरङ्गम-

---

१ 'भवति' । २ 'किमिह' । ३ इदं क्वचिन्न । ४ 'न त्वना' ।

**संप्रसारणात्परः पूर्वो भवति । तत 'एङः'। एङश्च संप्रसारणात्पूर्वो भवति ॥ किमर्थमिदमुच्यते?॥ अकृते आत्वे पूर्वत्वं यथा स्यात् । ततः 'पदान्तादति'[1]। 'एङ' इत्येव॥ इहापि तर्ह्यकृत आत्वे पूर्वत्वं स्यात्-आह्वः प्रह्व इति॥अस्त्यत्र विशेषः । आकारान्तलक्षणः कविधिः[2], तेनाऽनेनाऽवश्यमात्वं प्रतीक्ष्यम् । लिट् पुनरविशेषेण धातुमात्राद्विधीयते ॥**

॥*॥ नित्यं प्रसारणं ह्वो यण्वार्णादाङ्गं न पूर्वत्वम्[3] ।
योऽनादिष्टादचः पूर्वस्तत्कार्ये स्थानिवत्त्वं हि ॥१॥
प्रोवाच भगवान्कात्यस्तेनाऽसिद्धिर्यणस्तु ते ।
आतः को लिण् नैङः पूर्वः सिद्ध आह्वस्तथा सति ॥२॥*॥

प्र.]ज्यते 'एङ'इति। तेनात्वं बाध्यते पूर्वत्वविधानेन। **आकारान्तलक्षण** इति।अशितीति पर्युदासाश्रयेऽपि ह्वावामश्चेति ज्ञापकादाकारान्तलक्षणे कप्रत्यये कर्तव्ये पूर्वमेवात्वं भवति, ततस्तन्निमित्तः प्रत्यय इति भावः।उक्तार्थसङ्ग्रहश्लोकौ-**नित्यं प्रसारणमिति** । कृताऽकृतप्रसङ्गित्वादिति भावः । तत्र कृते पूर्वत्वं क्रियतामाकारलोप इति वार्णादाङ्गमिति वचनादाकारलोपो भवति न तु पूर्वत्वं, तत्राकारलोपस्य स्थानिवत्त्वादुवङ्नास्तीति ह्वो यण्प्रवर्तत इत्यर्थः।इतर आह-**योऽनादिष्टादिति। तेनासिद्धिरिति।** 'असिद्धवदत्राभा'दित्याकारलोपस्येत्यर्थः।तस्याऽसिद्धत्वाद्यणादेशो भवत्वित्यर्थः। जुहुवतुरित्यत्रापि तथैव यण्स्यादित्याह-**एङः पूर्व इति** । 'आह्वे' इत्यत्रापि तथैव पूर्वत्वं स्यादित्याह-**आतः क इति** ।**लिण्नेति**। लिड् धातुमात्राद्विधीयते न त्वाकारान्तादेवेत्यर्थः । [आतोऽनुपसर्गे कः] ॥

उ.]प्यात्वं बाधित्वा पूर्वं सम्प्रसारणं पूर्वत्वञ्चेत्युवङ्ङिह्वो 'जुहुवु'रित्यादाविति भावः। **पर्युदासाश्रयेऽपीति** । अन्यथाऽन्योन्याश्रयः स्यादिति भावः । आभीयाऽसिद्धाऽनित्यत्वेनाऽपि 'जुहुवतु'रिति सिध्यति । ह्वः के कृते आल्लोपात्पूर्वं सम्प्रसारणं, यतो नित्यम् । नित्यत्वं दर्शयति-**कृतेति** । एवञ्च ह्वो यण्फलतीत्यर्थः । वार्णादित्यादि व्याचष्टे-**तत्र कृते इति** । 'यतोऽनादिष्टादचः पूर्वत्वे स्थानिवत्त्वमतो भगवान् कात्यः प्रसारणिभ्यो ङं प्रोवाचे'त्यन्वयः । प्रत्याख्यानवाद्याह-**तेनाऽसिद्धिर्यणस्तु त इति** । **तेन**-आभा'दिति सूत्रेण,यतोऽसिद्धिरतो यणस्त्वित्यर्थः।'प्रोवाच भगवान् कात्य' इत्युक्त्या 'ङ'विधानस्य 'आह्व'सिध्यर्थमावश्यकता ध्वनिता । तथा नेदमेव ज्ञापकमीदृशे विषये आभीयाऽसिद्धत्वाऽभावस्य, वार्णादाङ्गमित्येतदभावस्य वेति जुहुवतुरित्यादिसिद्धिः।योगविभागस्य तवाऽपि कर्तव्यत्वेन गौरवस्य तदवस्थत्वादिति च ध्वनितम् । एवञ्च 'तेनाऽसिद्धि'रित्युक्तिरेकदेशिनः प्रौढ्येति च ध्वनितम् ।

१ 'पदान्तादिति' २ 'कप्रत्ययविधिः' । ३ 'पूर्वत्वं हि' । ४ 'प्रह्वः' । ५ न्तादि' ।

## सुपि स्थः ॥ ३।१।४ ॥

॥*॥ सुपि स्थो भावे च ॥*॥ सुपि स्थ इत्यत्र भावे चेति वक्तव्यम् । इहापि यथा स्यात्—आखूत्थो वर्तते, श्येनोत्थः, शलभोत्थः ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥*॥ योगविभागात्सिद्धम् ॥*॥ योगविभागः करिष्यते । [ 'आतोऽनुपसर्गे कः' ] । आतोनुपसर्गे को भवति । ततः 'सुपि' । सुपि चाऽऽतः को भवति । कच्छेन पिबति[2] कच्छपः । कटाहेन पिबति[2] कटाहपः । द्वाभ्यां पिबति[2] द्विपः ॥ ततः'स्थः' । स्थश्च[3] को भवति सुपीति ॥ किमर्थमिदम् ?॥ भावे यथा स्यात् ॥ कुतो नु खल्वेतद्भावे भविष्यति न पुनः कर्मादिष्वपि[5] कारकेष्विति ?॥ योगविभागादयं कर्तुरपकृष्यते । न चान्यस्मिन्नर्थे आदिश्यते । 'अनिर्दिष्टार्थाश्च प्रत्ययाः स्वार्थे भवन्ती'ति स्वार्थे भविष्यति[6] । तद्यथा 'गुप्तिज्किद्भ्यः सन्' । 'यावादिभ्यः कँ'न्निति[7] ।

सोऽसौ स्वार्थे भवन्भावे भविष्यति ॥ [ सुपि स्थः ] ॥

---

प्र॰] सुपि स्थः । कच्छेन पिबतीति । अत्र केचिदाहुः—कच्छं पिबतीत्येवमसन्तमप्यवयवार्थमाश्रित्य कर्मोपपदः को विधास्यते किं योगविभागेन ? । नैतत्साधूच्यते । कच्छेन पिबति द्वाभ्यां पिबतीत्येतस्मिन् सत्येवार्थेऽसदर्थाश्रयेण रूढिशब्दानामपि व्युत्पत्तेरयुक्तत्वात् । यत्र तु सर्वात्मनाऽर्थानुगमो नास्ति यथा 'तैलपायिके'ति तत्रैवाऽसदर्थाश्रया व्युत्पत्तिः क्रियते। भावे यथा स्यादिति। अत्राप्याहुः—'घञर्थे कविधान'मिति कः सिद्ध इति । एवं तर्हि नित्यसमासार्थं 'स्थ' इत्यनेन उपपदाश्रयः को विधीयते । अन्यथा पाक्षिकः षष्ठीसमासः स्यात् । अनिर्दिष्टार्था इति । प्रत्यासन्नत्वात्तस्यार्थस्येति भावः। यद्येवं 'स्थ' इत्यनेन भावे विधीयमानः कः कर्तारं बाधेत। तथा च 'समस्थ' इति कर्तरि न स्यात् । नैष दोषः।यद्यत्र साक्षाद्भावशब्दोपादानेन भावे को विधीयेत तदा भावः कर्तारं तक्रकौण्डिन्य-

---

उ.] सुपि स्थः। भाष्ये—भावे चेति। चात्कर्तरि। कच्छेन पिबतीति । अकर्मण्युपपदे प्रत्ययार्थं सुपीति योगविभाग इति भावः । सत्येवार्थे इति । 'एव'शब्दो वाक्यालङ्कारे । संभवति योग्येऽर्थेऽसदर्थाश्रयेण व्युत्पादनमयुक्तमित्यर्थः । नित्यसमासेति।'उपपदमति'ङित्यनेनेति भावः।'घञर्थे कविधान'मित्येतदुदाहरणपरे'स्थास्नापाव्यधिहनियुध्यर्थ'मित्यत्र 'स्था'ग्रहणन्तु कर्माद्यर्थमिति बोध्यम् । प्रत्यासन्नत्वादिति । अत एवाऽस्य नित्यमेकत्वमेव न तु घञादिवाच्यवद्द्वित्वादियोगोऽपीति भावः। तक्रकौण्डिन्येति । विधेयविषय एव स न्यायो नाऽनुवादविषय इत्यन्ये ॥

---

१ इदं लुप्तं स्यात् । २ 'पिबतीति' । ३ 'सुपि को भवति' । ४'तावदयं' । ५ इदं क्वचिन्न । ६ 'भविष्यन्ति' । ७ इतिः क्वचिन्न ।

## तुन्दशोकयोः परिमृजापनुदोः ॥ ३।२।५ ॥

॥*॥ तुन्दशोकयोः परिमृजापनुदोरालस्यसुखाहरणयोः ॥*॥ तुन्दशोकयोः परिमृजापनुदोरित्यत्रालस्यसुखाहरणयोरिति वक्तव्यम् । तुन्दपरिमृजोऽलसः। शोकापनुदः पुत्रो जातः । यो हि तुन्दं परिमार्ष्टि तुन्दपरिमार्जः स भवति। यश्च शोकमपनुदति शोकापनोदः स भवति ॥*॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानम् ॥*॥ कप्रकरणे मूलविभुजादिभ्य उपसङ्ख्यानं कर्तव्यम् । मूलविभुजो रथः । नखमुचानि धनूंषि । काकगुहास्तिलाः । सरसीरुहं कुमुदम् ॥

## गापोष्टक ॥ ३।२।८ ॥

॥*॥सुरा[1]शीध्वोः पिबतेः॥*॥सुराशीध्वोः पिबतेरिति वक्तव्यम् । इह मा भूत् । क्षीरपा ब्राह्मणीति॥ पिबतेरिति किमर्थ[2]म्?॥या हि सुरां पाति सुरापा सा भवति॥*॥बहुलं तणि॥*॥बहुलं तणीति वक्तव्यम् ॥ किमिदं 'तणीति'?॥ ॥*॥[त[3]णीति] संज्ञाछन्दसोर्ग्रहणम्॥*॥ या ब्राह्मणी सुरापी भवति नैनां देवाः पतिलोकं नयन्ति। या ब्राह्मणी सु[4]रापा भवति नैनां देवाः पतिलोकं नयन्ति॥

---

प्र.]न्यायेन बाधेत । सामर्थ्यात्त्वयं भावे व्यवतिष्ठते इति भावेन न बाध्यते कर्ता॥

तुन्द । आलस्यसुखाहरणयोरिति । आलस्ये गम्यमाने सुखोत्पादने च प्रत्ययो भवतीत्यर्थः।तत्र सामर्थ्यादलसे कर्तरि सुखस्य चाऽऽहर्तरि प्रत्ययो भवतीत्युक्तं भवति । शोकापनोद इति ।यः संसारानित्यतोद्भावनादिना शोकमेव निवर्तयति न तु सुखमुत्पादयति स शोकापनोदः । [ तुन्दशोकयोः ] ॥

गापोष्टक्। पिबतेरिति । लुग्विकरणपरिभाषालभ्यार्थकथनम्।[गापोष्टक् ]॥

---

च.] तुन्दशोकयोः। तत्र सामर्थ्यादिति। एवं सति ते गम्ये भवत इत्यर्थः। तुन्दपरिमृजे मृजेरचि 'क्ङिति चे'ति पक्षे वृद्धिः प्राप्नोति, सा भवत्येव सत्यभिधाने । यत्तु 'अची'त्येव वक्तव्ये अजादावित्युक्तेरादिग्रहणसामर्थ्यान्मुख्याजादावेव प्रवृत्तिरिति, तन्न ; तत्र तदभावात्, 'यस्मिन्विधि'रिति परिभाषालभ्याऽऽदिग्रहणस्यैव तत्राऽनुवादाच्च । अत्रत्यभाष्यस्वरसात्तत्र 'क्ङि'त्पदेनातिदेशिकक्ङितोरेव ग्रहणम् । व्याकरणान्तरे–'सङ्क्रम'पदेन तयोरेव ग्रहणाच्चेति परे । 'मूलविभुजादिभ्य' इति तु तादर्थ्ये चतुर्थी । काकगुहा इति । काकेभ्यो गूहितव्या इत्यर्थः । 'घञर्थे कविधान'मित्यनेनाऽत्रापि सिध्यत्येतत्। सरसि सरस्यां वा रोहति । कौ मोदत इत्यर्थः । [ तुन्दशोकयोः ] ॥

गापोष्टक्। बहुलं तणीति । पक्षे 'आतोऽनुपसर्गे' इति कः । या ब्राह्मणी सुरापेति । सुरां पिबतीत्यर्थे एवाऽयं प्रयोग इति बाहुलकाश्रयणम् ॥

---

१ 'सीध्वोः' । २ इदं क्वचिन्न । ३ इदं लुप्तं । ४ भाष्यमिदमित्यन्ये ।

## हरतेरनुद्यमनेऽच् ॥ ३।२।९ ॥

॥*॥ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम् ॥*॥ अच्प्रकरणे शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानं कर्तव्यम् ।—शक्तिग्रहः । शक्ति॥लाङ्गल—लाङ्गलग्रहः ॥ लाङ्गल ॥ अङ्कुश—अङ्कुशग्रहः॥ यष्टि—यष्टिग्रह- । यष्टि ॥ तोमर—तोमरग्रहः । तोमर॥ घट—घटग्रहः ॥घट ॥ घटी—घटीग्रहः । घटी ॥ धनुः—धनुर्ग्रहः॥*॥ सूत्रे च धार्यर्थे ॥*॥ सूत्रे च धार्यर्थे ग्रहेरुपसङ्ख्यानं [ कर्तव्यम् ] । सूत्रग्रहः । धार्यर्थे इति किमर्थं ?॥ यो हि सूत्रं गृह्णाति सूत्रग्राहः स भवति ॥ [ हरतेरनु ] ॥

## स्तम्बकर्णयो रमिजपोः ॥ ३।२।१३ ॥

॥*॥स्तम्बकर्णयोर्हस्तिसूचकयोः॥*॥स्तम्बकर्णयोरित्यत्र[2] हस्तिसूचकयोरिति वक्तव्यं।स्तम्बेरमो हस्ती। कर्णेजपः सूचकः।स्तम्बे रन्ता कर्णे जपितेत्येवान्यत्र॥

## शमि धातोः संज्ञायाम् ॥ ३।२।१४ ॥

धातुग्रहणं किमर्थम् ? ॥*॥ शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थम् ॥*॥ शमि संज्ञायां धातुग्रहणं क्रियते ॥ [किं प्रयोजनं ?॥ 'कृञो हेत्वादिषु टप्रतिषेधार्थम्'] । कृञो हेत्वादिषु टो मा भूदिति । शमि संज्ञायां धातोरज्भवतीत्यस्यावकाशः—शंवदः शंभवः[3] । टस्यावकाशः—श्राद्धकरः पिण्डकरः । शङ्करा नाम परिव्राजिका, शङ्करा नाम शकुनिका तच्छीला च[1],तस्यामुभयं प्राप्नोति । परत्वाट्टः स्यात् । धातुग्रहणसामर्थ्यादजेव भवति ॥ कुणरवाडवस्त्वाह—नैषा शङ्करा । शङ्करैषा ॥ [कुत एतत् ?] ॥ गृणातिः शब्दकर्मा तस्यैव प्रयोग इति ॥ [ शमि धातोः ] ।

## अधिकरणे शेतेः ॥ ३।२।१५ ॥

॥*॥ अधिकरणे शेतेः पार्श्वादिषूपसङ्ख्यानम् ॥*॥ अधिकरणे शेतेः पार्श्वा-

---

प्र.] हरतेरनु । अच्प्रकरणे इति । घटग्रहणेनैव सिद्धे घटीग्रहणं लिङ्गविशिष्टपरिभाषाऽनित्यत्वज्ञापनार्थम् । [ हरतेरनुद्यमनेऽच् ] ॥

शमि धातोः । शङ्करेति । पृषोदरादित्वात्संज्ञायां गकारस्य ककारव्यत्ययेन शङ्कराशब्दस्य सिद्धत्वात्तदर्थं धातुग्रहणं न कर्तव्यमित्यर्थः । [शमि धातोः] ।

---

उ.] हरतेरनु। लिङ्गेति । तत्फलन्तु 'देवदत्तसखी'त्यादौ टजभावः । भाष्ये—धार्यर्थे इति । ग्रहणपूर्वकधारणे लाक्षणिकाद्ग्रहेरित्यर्थः ॥ [ हरतेरनुद्यमनेऽच ] ।

शमि धातोः । ककारव्यत्ययेनेति । 'नैषा शङ्करे'ति भाष्यविरोधाच्चिन्त्यमेतत् । धातुग्रहणं न कर्तव्यमिति । 'ट'बाधनार्थं न कर्तव्यमित्यर्थः । क्विपो बाध-

---

१ इदं क्वचिन्न । २ 'स्तम्बकर्णयोरमिजपोरित्यत्र' । ३ 'शंभवः शंवदः' ।

दिक्षूपसङ्ख्यानं कर्तव्यम् । पार्श्वशयः पृष्ठशयः उदरशयः[2] ॥*॥ दिग्धसहपूर्वाच्च ॥*॥ दिग्धसहपूर्वाच्चेति वक्तव्यम् । दिग्धसहशयः ॥*॥ उत्तानादिषु कर्तृषु ॥*॥ उत्तानादिषु कर्तृष्विति वक्तव्यम् । उत्तानशयः । अवमूर्द्धशयः ॥ ॥*॥ गिरौ डश्छन्दसि ॥*॥ गिरावुपपदे छन्दसि डो वक्तव्यः। गिरौ शेते गिरिशः। ॥*॥ तद्धितो वा [ यथा[3] लोमशस्तथा गिरिशः ] ॥*॥ तद्धितो वा पुनरेष भविष्यति । गिरौ [गिरौ[4] शेते, गिरिरस्यास्तीति] गिरिशः ॥ इति ॥

चरेष्टः ॥ ३।२।१६ ॥

इह कस्मान्न भवति,–कुरूंश्चरति पञ्चालांश्चरतीति ? ॥ अधिकरण इति वर्तते ॥ ननु च कर्मणीत्यपि वर्तते, तत्र कुत एतदधिकरणे भविष्यति न पुनः कर्मणीति ? ॥*॥ चरेर्भिक्षाग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य ॥*॥ [ चरेर्भिक्षा-[1] ग्रहणं ज्ञापकं कर्मण्यप्रसङ्गस्य]। यदयं 'भिक्षासेनादायेषु चे'ति चरेर्भिक्षाग्रहणं करोति तज्ज्ञापयत्याचार्यो–'न भवति कर्मणी'ति ॥ [ चरेष्टः ] ॥

---

प्र.] अधिकर । दिग्धसहपूर्वाच्चेति । 'दिग्धसह' शब्दस्य समुदायस्य पूर्वत्वमाश्रीयते न तु प्रत्येकम् । तत्र दिग्धेन सह शेत इत्यचि कृते मयूरव्यंसकादित्वात् समासः । तद्धितो वेति । यो गिरौ शेते गिरिरस्यास्तीति लोमादिषु दर्शनाच्छप्रत्ययः। अन्ये त्वाहुः–गिरौ गिरौ शेत इति 'सङ्ख्यैकवचना'दिति सप्तम्यन्ताच्छस् प्रत्ययः । व्युत्पत्तिर्हि यथाकथंचित्कर्तव्या, उपायानामनियमात् । तदुक्तं हरिणा- 'वैरवासिष्ठगिरिशास्तथैकागारिकादयः । कैश्चित्कथं चिदाख्याता निमित्तावधिसङ्करैः' ॥ इति । 'छन्दसी'ति वचनाद्भाषायां गिरिशशब्दस्याऽसाधुत्वमाहुः ॥

चरेष्टः । कुरूंश्चरतीति । यस्य कुरव एव प्राप्याः स कुरूंश्चरतीत्युच्यते । यश्च कुरुषु भ्रमति स कुरुषु चरतीत्युच्यते । [ चरेष्टः ]

---

उ.] नार्थन्तु तदावश्यकमिति 'स्थः क चे'ति सूत्रे भाष्ये स्पष्टम्॥[शमि धातोः]॥

अधिकरणे । मयूरव्यंसकेति । दिग्धसहपूर्वता प्रायोगिकी बोध्या, पृथग् 'दिग्धसह' शब्दस्य सिद्ध्यभावात् । 'गिरौ शेते' इत्यर्थे तद्धितस्याऽविधानादाह–यो गिराविति । अन्ये त्वाहुरिति। अत्राऽरुचिस्त्वदन्तशब्दाऽसिद्धिः, अव्ययत्वापत्तिः, शसः स्वार्थिकत्वेन 'गिरौ गिरौ शेते' इति विग्रहाऽसङ्गतिश्च। वैरेति। वीरस्येदं वीराया वा वीरादागतं तत्र भवमिति। वसिष्ठस्येदं तेन कृतं प्रोक्तं वा। गिरौ शेते गिरिं श्यति वा गिरिशः । निमित्तम् -अर्थः, अवधिः–प्रत्ययानाम्प्रकृतिः, तत्सङ्करैरित्यर्थः ॥

चरेष्टः । कुरूंश्चरतीति । तान् गच्छतीत्यर्थः । यद्यर्थभेदो न स्यात्तर्हि द्वितीयान्तात्प्रत्ययाऽनुत्पत्तिप्रतिपादनं व्यर्थं स्यादत आह—यश्चेति । भिक्षाचरे[ति]

---

१ इदं क्वचिन्न । २ 'उरःशयः' । ३ इदं लुप्तं स्यात् । ४ 'गिरौ शेते' ।

दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥२१॥

॥*॥ किंयत्तद्बहुषु कृञोऽज्विधानम् ॥*॥ किंतत्तद्बहुषु कृञोऽज्विधानं कर्तव्यम्। किंकरा। किम्॥यत्–यत्करा । यत्॥तत्–तत्करा तत्॥बहु–बहुकरा ॥

स्तम्बशकृतोरिन् ॥ ३।२।२४ ॥

॥*॥ स्तम्बशकृतोर्व्रीहिवत्सयोः ॥*॥ स्तम्बशकृतोर्[1]व्रीहिवत्सयोरिति वक्तव्यम् । स्तम्बकरिर्व्रीहिः । शकृत्करिर्वत्सः ॥ [ स्तम्बशकृतोरिन् ] ।

फलेग्रहिरात्मम्भरिश्च ॥ ३।२।२६ ॥

आत्मंभरिरिति किं निपात्यते ? ॥ ॥*॥ [ आत्मम्भरिरिति ] आत्मनो मुम्भृञश्चेन्प्रत्ययः[3]॥*॥ अत्यल्पमिदमुच्यते ॥*॥ भृञः कुक्ष्यात्मनोर्मुम् च ॥*॥ भृञः कुक्ष्यात्मनोर्मुम् चेति वक्तव्यम् । कुक्षिम्भरिः । 'आत्मम्भरिश्चरति यूथमसेवमानः' ॥ [ फलेग्रहिरात्मम्भरिश्च ] ॥

एजेः खश् ॥ ३।२।२८ ॥

॥*॥ खश्प्रकरणे वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः ॥*॥

खश्प्रकरणे वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्य इति वक्तव्यम् ॥ वातमजाः मृगाः। वात ॥ शुनी–शुनिंधयः। शुनी ॥ तिल–तिलंतुदः । तिल ॥ शर्द्ध–शर्द्धंजहा माषाः ॥ [ एजेःखश् ] ।

प्र.] दिवाविभा । किं यदिति । वार्तिकेन सूत्रस्य बाधितत्वात्तस्याऽभावे किङ्करीत्यसाधुरित्याहुः । [ दिवाविभा ] ॥

---

उ.]चरतिश्चरणकरणकाऽर्जने लाक्षणिको, भिक्षार्थो वा, तत्रैव चाऽयं प्रयोग इष्यते, भाष्यप्रामाण्यात् । एतेन 'भिक्षया हेतुना चरती'त्यर्थक–'भिक्षाचर'प्रयोगसाधकेन तत्सूत्रेण विपरीतं 'कर्मणी'त्यस्य संबन्ध एव ज्ञाप्येतेति परास्तम् । सेनाग्रहणस्य ज्ञापकत्वं तु नोक्तं, सेनां चरति सेनायां चेत्यर्थद्वये अपीष्टेः । एवञ्च 'अधिकरण' इति 'कर्मणी'ति चोभयोरप्रेऽधिकारो, यथायोगञ्च संबन्ध इति ध्वनितम्॥

दिवाविभा । इत्याहुरिति । अत्राऽरुचिबीजन्तु वार्तिकस्य हेत्वादौ 'ट'-बाधनेन चरितार्थतया सूत्रस्थकिमादिग्रहणस्य भाष्येऽप्रत्याख्यानेन वा हेत्वादौ सूत्रे किमादिग्रहणसामर्थ्याट्टो भवत्येवेति । न च विपरीतमेवाऽस्तु, सूत्रस्थकिमादिग्रहणस्य सार्थक्याऽनुपपादनात् ॥ [ दिवाविभा ] ।

फलेग्रहि । भाष्ये–आत्मनो मुमिति । समासे कृते नलोपे च कृते ततः प्राग्वा मुन्निपात्य इत्यर्थः । [ फलेग्रहि ] ।

---

१ 'शकृतोरित्यत्र व्रीहि'। २ इदं लुप्तं स्यात् । ३ भाष्यमित्यन्ये ।

## नासिकास्तनयोर्ध्माधेटोः ॥ ३।२।२९ ॥

॥*॥स्तने धेटः॥*॥ स्तने धेट इति वक्तव्यम्। स्तनन्धयः। [॥*॥नासिकायां ध्मश्च[धेटश्च]॥*॥ नासिकायां ध्मश्च धेटश्चेति वक्तव्यम्।नासिकन्धमः। नासिकन्धयः] । ततो ॥*॥मुष्टौ ध्मश्च॥*॥ मुष्टौ ध्मश्च धेटश्चेति वक्तव्यम्। मुष्टिन्धमः मुष्टिन्धयः ॥ अल्पल्पमिदमुच्यते ॥*॥ नासिकानाडीमुष्टिघटीखारीष्विति वक्तव्यम्॥*॥ नासिकन्धमः नासिकन्धयः । नासिका ॥ नाडी-नाडिंधमः नाडिंधयः । नाडी ॥ मुष्टि–मुष्टिन्धमः मुष्टिन्धयः । मुष्टि॥घटी घटिन्धमः घटिंधयः । घटी ॥ खारी–खारिन्धमः खारिन्धयः ॥

## प्रियवशे वदः खच् ॥ ३।२।३८ ॥

॥*॥ खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम् ॥*॥ खच्प्रकरणे गमेः सुप्युपसङ्ख्यानं कर्तव्यम् । मितङ्गमो हस्ती, मितङ्गमा हस्तिनी । ॥*॥ विहायसो विह च॥*॥विहायसो विह इत्ययमादेशो भवतीति वक्तव्यम् ,खच्च।विहङ्गमः। ॥*॥ खच्च डिद्वा ॥*॥ खच्च डिद्वा वक्तव्यः । विहङ्गः । ॥*॥ डे च ॥*॥ डे च विहायसो 'विह' इत्ययमादेशो वक्तव्यः । विहगः। [ प्रियवशे वदः ] ।

## अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ३।२।४८ ॥

॥*॥ डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानम् ॥*॥ डप्रकरणे सर्वत्रपन्नयोरुपसङ्ख्यानं कर्तव्यम् । सर्वत्रगः,पन्नगः ॥*॥ उरसो लोपश्च॥*॥ उरसो लोपश्च वक्तव्यः । उरगः ॥*॥ सुदुरोरधिकरणे ॥*॥ सुदुरोरधिकरणे डो वक्तव्यः । सुगः दुर्गः ॥*॥ निसो देशे ॥*॥ निसो देशे डो वक्तव्यः । निर्गो देशः ।

प्र.] नासिका । स्तने धेट इति। यथासङ्ख्याऽभावार्थ एतावान्योगः कर्तव्य इत्यर्थः। वार्तिकस्याप्यव्याप्तिमुद्भावयन् भाष्यकार आह–अल्पल्पमिति।डे चेति।विहायःशब्दपूर्वाद्गमेरन्येष्वपि दृश्यत इति डप्रत्यये सति विहादेशः । [नासिकास्तनयो ] ॥

उ.] नासिका । एतावान्योग इति । एतदन्वाख्यायकं वार्तिकमित्यर्थः । वार्तिकस्याऽपीति । अपिना 'नाडीमुष्टयोश्चे'ति सूत्रस्याऽपि । 'मुष्टौ ध्मश्चे'ति वार्तिकं 'नाडीमुष्टयोश्चे'ति पठितसूत्रस्य व्यवस्थापकमेव । नैतावता तत्सूत्रमप्रामाणिकमिति भ्रमः कार्यः, 'यथासङ्ख्य'सूत्रस्थभाष्ये स्पष्टन्तत्सूत्रोपादानात् । यद्यपि नाडीमुष्टिविषये तत्सूत्रे यथासङ्ख्यमुक्तन्तथाप्येतद्भाष्यवार्तिकविरोधातद्भाष्यं प्रौढिवाद इति बोध्यम् । एवञ्चाऽत्र 'नाडी'शब्देन 'ध्म' एव संबन्धो, 'मुष्टि' शब्देनोभयोरिति बोध्यम् । पूर्ववार्तिकदूषणेन नाडीशब्दसम्बन्धोऽप्युभयोरित्याह—नासिकानाडीत्यादि । अत्र ध्मश्च धेटश्चे'ति वर्तते ॥ [ नासिका ] ।

१ क्वचिन्न । २'खरी'। ३पूर्वापरवैपरीत्यं क्वचित् । ४'चादेशो'।५'सुर्गं' 'दुर्गम' ।

अपर आह॥*॥ डप्रकरणेऽन्येष्वपि दृश्यते ॥*॥ डप्रकरणेऽन्येष्वपि डो दृश्यत इति वक्तव्यम्। ततः स्त्र्यगारगोऽश्नुते यावदन्नाय ग्रामगः।ध्वंसते गुरुतल्पगः।

## आशिषि हनः ॥ ३।२।४९ ॥

॥*॥ दारावाहनोऽणन्त्यस्य च टः संज्ञायाम् ॥*॥ दारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः। अन्त्यस्य च टो वक्तव्यः। दार्वाघाटस्ते वनस्पतीनाम्। ॥*॥ चारौ वा ॥*॥ चारावुपपदे आङ्पूर्वाद्धन्तेरण्वक्तव्यः। अन्त्यस्य च टो वा[2] वक्तव्यः। चार्वाघाटः चार्वाघातः ॥*॥ कर्मणि समि च ॥*॥ कर्मण्युपपदे सम्पूर्वाद्धन्ते[र्द्धातो]रण्वक्तव्योऽन्त्यस्य च टो वा[2] वक्तव्यः। वर्णसङ्घाटः वर्णसङ्घातः। पदसङ्घाटः पदसङ्घातः ॥ [ आशिषि हनः ] ॥

## लक्षणे जायापत्योष्टक् ॥ ३।२।५२ ॥

कथमिदं विज्ञायते—लक्षणे कर्तरीति, आहो स्विल्लक्षणवति कर्तरीति ?॥ किं चातः ? ॥ यदि विज्ञायते 'लक्षणे कर्तरी'ति। सिद्धं जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति[3]। इदं तु न सिध्यति—जायाघ्नो ब्राह्मणः। पतिघ्नी वृषलीति ॥ अथ विज्ञायते—लक्षणवति कर्तरीति ॥ सिद्धं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति। जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति[3] न सिध्यति ॥

अस्तु तर्हि लक्षणे कर्तरीति॥ कथं जायाघ्नो ब्राह्मणः पतिघ्नी वृषलीति?॥ "अकारो मत्वर्थीयः"। जायाघ्नोऽस्मिन्नस्तीति सोऽयं जायाघ्न [इति] ॥ पतिघ्नी वृषलीति न सिध्यति॥ अस्तु तर्हि 'लक्षणवति कर्तरी'ति॥ कथं जायाघ्नस्तिलकालकः पतिघ्नी पाणिरेखेति[3] ? ॥ अमनुष्यकर्तृके [चे]त्येवं भविष्यति ॥

## अमनुष्यकर्तृके च ॥ ३।२।५३ ॥

॥*॥[अप्राणिकर्तृके[4]] ॥*॥ अप्राणिकर्तृक इति वक्तव्यम्। इह मा भूत् नगरघातो हस्ती। यद्यप्राणिकर्त्तृक इत्युच्यते शशघ्नी शकुनीति न सिध्यति ॥ अस्तु तर्हि 'अमनुष्यकर्तृके चे'त्येव ॥ कथं नगरघातो हस्ती ? ॥ 'कृत्यल्युटो बहुल'मित्येवा[5]ऽत्राऽण्भविष्यति ॥ [ अमनुष्यकर्तृके च ]॥

## पाणिघताडघौ शिल्पिनि ॥ ॥ ३।२।५५ ॥

॥*॥ राजघ उपसङ्ख्यानम् ॥*॥ राजघ उपसङ्ख्यानं कर्तव्यम्। राजघः॥

## आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ३।२।५६ ॥

॥*॥ ख्युनि च्विप्रतिषेधानर्थक्यं ल्युट्ख्युनोरविशेषात् ॥*॥ ख्युनि च्वि-

---

उ.] आढ्यसुभग। ख्युनभावे करणे ल्युटोऽवश्यं सत्त्वेनाऽच्वाविति व्यर्थमित्याह

---

१ 'भवतीति वक्त'। २ 'वा टो'। ३ 'लेखा'। ४इदं लुप्तं स्यात्।५'त्येवमत्रा'।

प्रतिषेधोऽनर्थकः ॥ किं कारणम् ?॥ 'ल्युट्ख्युनोरविशेषात्' । ख्युना मुक्ते ल्युटा भवितव्यं । न चैवाऽस्ति विशेषश्च्व्यन्तउपपदे वा ख्युनो वा ल्युटो वा । तदेव रूपं स एव च स्वरः॥ अयमस्ति विशेषः–ल्युटि सतीकारेण भवितव्यं, ख्युनि सति न भवितव्यम्॥ख्युन्यपि सति–[ईकारेण] भवितव्यम् । एवं हि सौनागाः पठन्ति–॥*॥ 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानासुपसङ्ख्यानम्' ॥*॥ इति॥ अयं तर्हि विशेषः,–ख्युनि सति नित्यसमासेन भवितव्यम्, उपपदसमासो हि नित्यसमास इति । ल्युटि सति न भवितव्यम्॥ल्युट्यपि [सति] भवितव्यम् । गतिसमासोऽपि हि नित्यसमासः, च्व्यन्तं च गतिसंज्ञं भवति ॥ [॥*॥ सुमर्थन्तु ॥*] ॥ सुमर्थं तर्हि प्रतिषेधो वक्तव्यः । ख्युनि सति मुमा भवितव्यं ल्युटि सति न भवितव्यम् ॥*॥ सुमर्थमिति चेन्नाऽव्ययत्वात् ॥*॥ सुमर्थमिति चेत्तन्न ॥ किं कारणम् ? ॥ 'अव्ययत्वात्' । अनव्ययस्य मुमुच्यते, च्व्यन्तं चाऽव्ययसंज्ञं [भवति]॥*॥उत्तरार्थं तु॥*॥ उत्तरार्थं तर्हि प्रतिषेधो वक्तव्यः । 'कर्तरि भुवः खिष्णुच्खुकञौ' । 'अच्वा'वित्येव । आढ्यीभविता ॥ अथेदानीमनेन मुक्ते ताच्छीलिक इष्णुज्विधीयते सोऽत्र कस्मान्न भवति?॥ रूढिशब्दप्रकारास्ताच्छीलिकाः। न च रूढिशब्दा गतिभिर्विशेष्यन्ते।

---

प्र.] आढ्य । उत्तरार्थमिति । उत्तरत्र च्विप्रतिषेधस्य चरितार्थत्वादाढ्यीकरणमिति ल्युटा भाव्यम् । तत्र यदन्यैरुक्तं–'प्रतिषेधसामर्थ्यात्ख्युन्यसति ल्युडपि न भवतीति ल्युटोऽप्ययमर्थतः प्रतिषेध' इति । तदयुक्तम् । रूढिशब्दप्रकारा इति । यथा रूढिशब्देषु क्रिया केवलं व्युत्पत्त्यर्थमाश्रीयते गच्छतीति गौरिति । तेन गमनक्रियारहितोऽपि गौर्भवति । गोपिण्डाच्चाऽन्योऽर्थो गमनविशिष्टोऽपि गौर्न भवति । तथा ताच्छीलिका अपि क्रियाविषयं ताच्छील्यमुपादाय क्रियावेशाऽभावेपि प्रयुज्यन्ते, के चिदेव तु गतिना संबध्यन्ते,–आगामुकः प्रवर्षुक इति । न तु सर्वे । यथा कामुक इति । न भवति 'प्रकामुक' इति । अत एव प्रकारग्रहणं सादृश्यार्थम् । रूढिशब्दानां न केषांचिद्गतिसंबन्धो भवति ताच्छीलिकानां तु भवति केषां चिन्न सर्वेषामिति प्रतिपादयति । द्रव्योपलक्षणाय क्रियायाः प्रवृत्तत्वादात्मातिशयं प्रति आकाङ्क्षाया अभावात्तदतिशयद्योतनार्थं गतिसंबन्धाभावस्ताच्छीलिकेष्वित्यर्थः ।

---

उ.]भाष्ये–ख्युना मुक्त इति।भाष्ये स एव स्वरः।लित्स्वरानित्स्वराभ्याम्। ल्युटा भाव्यमिति। अवश्यभाव्यमित्यर्थः।तदयुक्तमिति। भाष्यविरोधादित्यर्थः । उत्तरार्थत्वं वदता इहार्थत्वाऽभावस्य भाष्यकृता बोधितत्वादिति भावः । केचिदेवेति । स्पष्टं प्रतीयमानक्रियावेशा इति भावः। द्रव्योपलक्षणायेति । अवस्थाविशेषविशिष्ट-

---

१ इदं क्वचिन्न । २ 'ल्युटः ख्युनो वा' । ३ इदं वार्त्तिकमित्यन्ये ।

न हि भवति देवदत्तः प्रदेवदत्त इति । [ आढ्यसुभगस्थूल ] ॥

## कर्तरि भुवः खिष्णुच्खुकञौ ॥ ३।२।५७ ॥

किमर्थं खिष्णुजिकारादिः क्रियते न च खस्नुरित्येवोच्येत[1] । तत्रायमप्यर्थः स्वरार्थश्चकारो न कर्तव्यो भवति ॥ केनेदानीमिकारादित्वं क्रियते ? ॥ ॥*॥इष्णुच ईकारादित्वमुदात्तत्वात्कृतं भुवः॥*॥[2] भवतिरुदात्तस्तस्योदात्तत्वादिड् भविष्यति[3] ॥ इदं तर्हि प्रयोजनं–खिदयं क्रियते, तत्र चर्त्वे कृते सन्देहः स्यात् किद्वा खिद्वेति ॥ सन्देहमात्रमेतद्भवति॥सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति । खिदिति व्याख्यास्यामः । ॥*॥ नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥*॥ इदं तर्हि प्रयोजनं 'कृत्योकेष्णुच्चार्वादयश्चे'त्येष स्वरो यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम्, अय-

---

प्र.] प्रदेवदत्त इति।प्रकर्षेण देवनक्रिया न विशेष्यते, देवशब्दस्य रूढिशब्दत्वात्, तदवयवस्य च देवदत्तशब्दस्येत्यर्थः । व्याघ्रादयस्तु सोपसर्गा एव रूढिशब्दा इति तद्व्यतिरिक्तगत्यन्तरयोगस्तेषां नास्ति ॥ [ आढ्यसुभग ] ।

कर्तरि । नञ इति पञ्चमी । नञ उत्तरस्य स्वरसिद्ध्यर्थमित्यर्थः । अयमपीति । क्स्नुच्प्रत्ययः क्रियते, चकारः सामान्यग्रहणार्थ इति मन्यते । खिष्णुचि तु कृते इकारोच्चारणसामर्थ्यात्तदनुबन्धकपरिभाषा नाश्रीयते । [कर्त्तरि भुवः] ॥

---

उ.] स्योपलक्षणायेत्यर्थः। न तु क्रियाप्रकारको बोध इति तात्पर्यम् । वस्तुतस्त्वभिधानस्वाभाव्यात्केषाञ्चिदेव क्लृप्तप्रयोगाणां गतिसंम्बन्धो न सर्वेषामिति भाष्यतात्पर्यम्।

भाष्ये–इष्णुजिति । 'भुवश्चे'त्यनेन । 'प्रदेवदत्त' इत्यत्र 'प्र'शब्दस्य देवनक्रियायां दानक्रियायां वाऽन्वयः । नाद्य इत्याह–देवशब्दस्येति । नान्त्य इत्याह–तदवयवस्य चेति । 'तदवयवस्ये'ति बहुव्रीहिः । व्याघ्रादौ तर्हि संज्ञाशब्दे कथं गतिसंबन्धोऽत आह–व्याघ्रादयस्त्विति । [ आढ्यसुभग ] ॥

कर्त्तरि भुवः । भाष्ये–'न च क्ष्णु'रिति पाठः । उदात्तत्वादिति । तेन 'एकाच उपदेश' इत्यस्याऽप्रवृत्तिरिति भावः । ननु 'कृत्योकेष्णु'जिति सूत्रेण नञः स्वराऽभावादाह–नञ उत्तरस्येति । अन्तोदात्तविधायकमिदम्पूर्वपदप्रकृतिस्वरापवादः । ननु 'तदनुबन्धक'परिभाषया इष्णुच एव ग्रहणं भविष्यति न खिष्णुच इत्यत आह–इकारोच्चारणेति । चकारोच्चारणेनैव द्वयोर्ग्रहणे लक्षणप्रतिपदोक्तपरिभाषातदनुबन्धकपरिभाषाबाधे च ख्ष्णुचः करणेन षत्वणत्वयोरसिद्धत्वाऽभावे च सिद्धे इकारोच्चारणं व्यर्थमिति 'अयमपीटि कृते' इति भाष्यतात्पर्यम्।न सिध्यतीत्यादि त्वेकदेश्युक्तिरिति बोध्यम् ॥ [ कर्त्तरि भुवः ] ।

---

१'कस्नु' 'न ख्ष्णु'।२श्लोकवार्त्तिकम्।३'भवतेरुदात्तत्वादिकारादित्वं भविष्यति'।

मपीटि कृते षत्वे णत्वे चेष्णुजेव भविष्यति ॥ न सिध्यति–'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवे'ति । अथ वाऽसिद्धं खल्वपि षत्वं, तस्याऽसिद्धत्वादिस्नुजेव भविष्यति ।

॥*॥ इष्णुच ईकारादित्वमुदात्तत्वात्कृतं भुवः ।

नञस्तु स्वरसिद्ध्यर्थमिकारादित्वमिष्णुचः ॥*॥ [ कर्तरि भुवः ] ॥

## स्पृशोऽनुदके क्विन् ॥ ३।२।५८ ॥

किमर्थो नकारः ?॥*॥[नकारः] स्वरार्थः ॥*॥'ञ्नितो'त्याद्युदात्तत्वं यथा स्यात् । नैतदस्ति प्रयोजनम् । एकाचोऽयं विधीयते । तत्र नाऽर्थः स्वरार्थेन नकारेणाऽनुबन्धेन । धातुस्वरेणैव सिद्धम् ॥ यस्तर्ह्यनेकाज्दधृगिति ? ॥ वक्ष्यत्येतत्,–'धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यत' इति॥विशेषणार्थस्तर्हि॥ [ विशेषणार्थस्तर्हि भविष्यति ] ॥ क्व विशेषणार्थेनार्थः ? ॥ 'क्विन्प्रत्ययस्य कु'रिति। 'क्विप्रत्ययस्य कु'रित्युच्यमाने सन्देहः स्यात् क्विवैष प्रत्ययः क्विब्वेति॥ सन्देहमात्रमेतद्भवति । सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षण'मिति क्विप्रत्ययस्येति व्याख्यास्यामः।[स्पृशोनुदके]॥

## ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च ॥ ३।२।५९ ॥

दधृगिति किं निपात्यते ? ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च ॥ * ॥ धृषेर्द्विर्वचनमन्तोदात्तत्वं च निपात्यते ॥ [ ऋत्विग्दधृक् ] ॥

## त्यदादिषु दृशोऽनालोचने कञ्च ॥ ३।२।६० ॥

किमर्थो ञकारः ? ॥ ॥*॥ [ ञकारः ] स्वरार्थः ॥*॥ ञितीत्याद्यु-

---

प्र.] स्पृशोनु । संदेहः स्यादिति । किमेकपकारको निर्देश उत द्विपकारक इत्यर्थः । व्याख्यानत इति । तदनुबन्धकपरिभाषया च क्विपो ग्रहणाऽभावः ॥

त्यदादिषु । ञकारस्य कार्यद्वयं प्रति युक्तत्वं प्रश्नद्वारेण प्रदर्श्यते–किमर्थ इति।

---

उ.] स्पृशोऽनु । एकाचोऽयमिति भाष्ये । यङ्लुगन्तात्त्वयं न क्विन्, अनभिधानादिति भावः । ननु 'क्वि'ग्रहणे क्विपोऽपि ग्रहणं स्यादत आह–तदनुबन्धेति । अत्र सूत्रे 'कर्मणी'ति सम्बध्यत एव । 'मन्त्रस्पृ'गित्यादि तु क्विपा सिद्धम्। 'क्विन्प्रत्ययस्ये'ति बहुव्रीह्याश्रयणात्कुत्वमपि सिद्धम् ॥ [ स्पृशोऽनु ] ।

ऋत्विग्द । अन्तोदात्तत्वञ्चेति । इदञ्च क्विनो नकारसत्त्वे उक्तम् । स्रगुष्णिहोर्निपात्यमानवस्तुनः स्पष्टत्वात्तन्नोक्तम् । 'क्रुञ्चा'मिति निपातनान्नलोपाऽभाव

---

१इदं क्वचिन्न।२'दिष्णुजेव'।३'षत्वस्या'।४'भवति'।५ 'उदात्तत्वाद्भुवः सिद्धमिकारादित्वमिणुचः'। ६ 'त्वमिष्यते' । ७ इदं भाष्यमित्यन्ये । ८ क्विनिति' ।

दात्तत्वं यथा स्यात्॥ नैतदस्ति प्रयोजनम् ?। नकारेणाऽप्येष स्वरः सिद्धः। [॥*॥ विशेषणार्थस्तर्हि ॥*॥] विशेषणार्थस्तर्हि भविष्यति ॥ क्व विशेषणार्थेनार्थः ? ॥ 'कन्कर'बिति। कन्करबिति ह्युच्यमाने यौचितिकेत्यत्रापि प्रसज्येत ॥*॥ दृशेः समानान्ययोश्चोपसङ्ख्यानम् ॥*॥ दृशेः समानाऽन्ययोश्चोपसङ्ख्यानं कर्तव्यम्। सदृक्। सदृशः। अन्यादृक्। अन्यादृशः।

॥*॥ कृदर्थानुपपत्तिस्तु॥*॥कृदर्थस्तु नोपपद्यते। दृशेः कर्तरि प्राप्नोति। ॥*॥ इवार्थे तु तद्धितः॥*॥ इवार्थे त्वयं तद्धितो द्रष्टव्यः। स इवायं तादृक्। तादृशः। अन्य इवायमन्यादृक्। [अन्यादृश इति] ॥

अथ वा युक्त एवात्र कृदर्थः। कर्मकर्ताऽयम्। तमिवेमं पश्यन्ति जनाः, सोऽयं स इव दृश्यमानस्तमिवात्मानं पश्यति–तादृक्। अन्यमिवेमं पश्यन्ति जनाः, सोऽयमन्य इव दृश्यमानोऽन्यमिवात्मानं पश्यति–अन्यादृगिति॥

## सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप् ॥ ३।२।६१ ॥

प्र.]कृदर्थानुपपत्तिस्त्विति। यः कृतोऽर्थः स तादृशादिशब्दवाच्यो न भवति। तादृशादयो हि सदृशलक्षणमर्थमाचक्षते न तु दर्शनक्रियायां कर्तारमित्यर्थः। कर्मकर्तेति। कर्मण एव सौकर्यात्कर्तृत्वविवक्षायां कर्तर्येव प्रत्ययः क्रियत इत्यर्थः॥

उ.] इति 'परेश्चे'ति सूत्रे भाष्ये स्पष्टम् ॥ [ऋत्विग्दधृक्]।

त्यदादिषु।ञकारः केवलस्वरार्थ उताऽन्यार्थोऽपीति विचारतात्पर्यमाह–ञकारस्येति। भाष्ये–याविका अत्राऽपीति। न च ह्यनुबन्धकत्वादस्य कनो ग्रहणं न स्यादिति वाच्यं, येनाऽनुबन्धेन ह्यनुबन्धकत्वं तदनुच्चारण एव तत्प्रवृत्तेः। यः कृतोऽर्थ इति। प्रकृते दृशेः कर्तेत्यर्थः। भाष्ये–इवाऽर्थेऽयं तद्धित इति। अयं भावः–यथा 'दृग्दृशवतुष्वि'ति सूत्रे 'दृक्षे' इतिवार्तिकबलादनुक्तोऽपि क्सः कल्प्यते, तथा इवाऽधिकारे तद्धिते त्यदादिभ्यो दृग्दृशट्दृक्षाः प्रत्ययाः कल्प्याः। दृशटष्टित्त्वाच्च ङीबपि सिद्ध इति 'टिड्ढे'तिसूत्रे कञ्ग्रहणमपि न कार्यमिति लाघवमिति। भाष्ये–तमिवात्मानं पश्यतीति। प्रेरणावृद्धावप्यन्तर्भावितण्यर्थत्वान्न णिच्। तमिवात्मानं जनान्दर्शयतीत्यर्थः। अत्र प्रेरणावृद्ध्याऽधिकार्थत्वेनाऽज्ञानार्थत्वम्। कर्मण्युपपदे एवाऽयम्, तेन निवृत्तप्रेषणतया 'स इव पश्यती'ति विग्रहोऽनुचितः, 'सत्सूद्विषे'ति सूत्रे एव'कर्मणी'त्यस्य निवृत्तेः'सत्सू' इति सूत्रे भाष्ये ध्वनितत्वेनाऽत्राऽनुवृत्तेः सत्त्वात्। ननु 'कर्मकर्त्ते'ति व्यवहारोऽनुपपन्नः, कर्मत्वाऽभावात्कर्मवद्भावाऽभावाच्चेत्यत आह–कर्मण एवेति [त्यदादिषु दृशो]।

१इदं लुप्तं भवेत्।२'ह्युच्यमाने'।३'याविकात्रा'।४इदं क्वचिन्न।५'र्थेऽयं'।६'एवाऽयं'।

॥*॥ सदादिषु सुब्ग्रहणम् ॥*॥ सदादिषु सुब्ग्रहणं कर्तव्यम्। होता वेदिषत्। अतिथिर्दुरोणसत्॥ न तर्हीदानीमुपसर्गेऽपीति वक्तव्यम्?॥ वक्तव्यं च॥ किं प्रयोजनम्?॥ 'ज्ञापकार्थम्'॥ किं ज्ञाप्यम्?॥ एतज्ज्ञापयत्याचार्यो'ऽन्यत्र सुब्ग्रहणे उपसर्गग्रहणं न भवती'ति॥ किमेतस्य ज्ञापने प्रयोजनम्?॥ वदः सुप्यनुपसर्गग्रहणं चोदितं तन्न वक्तव्यं भवति॥

**अदोऽनन्ने॥ ३।२।६८॥ क्रव्ये च॥ ३।२।६९॥**

किमर्थमिदमुच्यते नाऽदोऽनन्न इत्येव सिद्धम्?॥ न सिध्यति। छन्दसी-त्येतद[१]नुवर्तते। भाषार्थोऽयमारम्भः। पूर्वस्मिन्नेव योगे छन्दोग्रहणं निवृत्तं, तच्चावश्यं निवर्त्यम्,—आसात्, सस्या[२]दित्येवमर्थम्॥ अत उत्तरं पठति॥*॥ अदोऽनन्ने क्रव्येग्र[३]हणं वासरूपनिवृत्त्यर्थम्॥*॥ अदोनन्ने क्रव्येग्र[३]हणं क्रियते॥[किं प्रयोजनं?॥ 'वासरूपनिवृत्त्यर्थम्'॥] वासरूपो मा भूदिति। [अदोनन्ने]।

प्र.] सत्सूद्विष। सदादीनां केषां चित्सकर्मकत्वात्कर्मैवोपपदं प्राप्नोतीति मत्वाह—सदादिष्विति। वेदिषदिति। वेद्यां सीदतीति क्विप्। पूर्वपदादिति षत्वं। दुरोणे सीदतीति दुरोणसत्। दुरोणं गृहम्। तन्न वक्तव्यमिति। अनुपसर्गग्रहणानुवृत्ति-मन्तरेणैवोपसर्गनिवृत्तेः सिद्धत्वादनुवृत्तिप्रदर्शनमपि न युज्यते। यत्र चानुपसर्ग-ग्रहणानुवृत्तिर्न संभाव्यते,—स्पृशोऽनुदके क्विन्नित्येतदपि ज्ञापनस्य प्रयोजनम्। तेनो-पस्पृशतीत्यादौ क्विन्न भवतीति। [सत्सूद्विष]॥

क्रव्ये च। वासरूपो मा भूदिति। तेन 'क्रव्याद' इत्यण्न भवतीत्यर्थः।

उ.] सत्सू। कर्मैवोपपदमिति। 'कर्मणी'त्यधिकारादिति भावः। सुब्ग्रहणन्तु तन्नि[४]वृत्तिद्योतनायेति बोध्यम्। वस्तुतः सुब्ग्रहणमेवाऽत्राऽनुवर्त्तते, 'कर्मणी'ति निवृ-त्तमित्यन्वाख्यानमेवैतत्।अत्र सूत्रे 'उपसर्गेऽपि' ग्रहणम् 'अनुपसर्ग' इत्यस्य 'आतो नुपसर्गे' इति सूत्रादनुवर्त्तमानस्याऽग्रे निवृत्तिद्योतनाय। भाष्यकार एतज्ज्ञापकेनैव सुब्ग्रहणस्योपसर्गेतरसुप्परत्वं व्याख्याय 'अनुपसर्गे' इत्यस्याऽनधिकारं द्योतयति। तत्फलं ज्ञापकसिद्धस्याऽसार्वत्रिकत्वेन 'प्रष्ठ' इत्यादिसिद्धिः। ननु 'वदः सुपी'त्यत्र 'गदमदे'त्यतोऽनुपसर्गग्रहणाऽनुवृत्तिप्रदर्शनपरं वार्तिकं नाऽपूर्वकरणपरमत आह—अनुपसर्गेति। यत्र चेति। यत्र 'स्पृशोऽनुदके' इत्यादावनुपसर्गग्रहणानुवृत्तिर्न सम्भाव्यते एतदपि ज्ञापनस्य प्रयोजनमित्यन्वयः। इदञ्चिन्त्यम्। अत्रापि 'आतोऽ-नुपसर्गे' इत्यतोऽनुवृत्तिसम्भवात्॥ [सत्सूद्विषद्रुह]॥

अदोऽनन्ने। भाष्ये—आमादित्येवमर्थमिति। लोके एतात्सिद्ध्यर्थमि-त्यर्थः। क्रव्याद इत्यणेति। आममांसभक्षणकर्त्तर्यर्थे इति भावः। पक्वमांस-

१ 'सीति वर्त्तते'। २ इदं क्वचिन्न।३'क्रव्यग्रह'। ४ 'तृन्नि' 'तुन्नि'।

## मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥ ३।२।७१ ॥

॥*॥ श्वेतवहादीनां डस् ॥*॥ **श्वेतवहादीनां डस्वक्तव्यः । श्वेतवा इन्द्रः** ॥*॥ पदस्य च [वैर्थम्¹] ॥*॥ **पदस्येति च वक्तव्यम् । इह मा भूत् । श्वेतवाहौ श्वेतवाह इति ॥ किं प्रयोजनम् ?**॥*॥ वैर्थम् ॥*॥ **रुर्यथा स्यात्॥ क्रियते वैर्थं निपातनम्, 'अवयाः श्वेतवाः पुरोडाश्चे'ति । आतश्च वैर्थम् । उक्थशःशब्दस्य हि सामान्येन रुः सिद्धो न तस्य निपातनं क्रियते। तत्र वक्तव्यं**

---

प्र.] **मन्त्रे । डस्वक्तव्य इति ।** ण्विन्प्रत्ययबाधनार्थ इति भावः । **पदस्येति ।** भाविपदाश्रयेणेदमुच्यते । यत्र डसन्तस्य पदत्वं भविष्यति तत्र डस्प्रत्ययोऽन्यत्र ण्विन्नेवेत्यर्थः । **तत्र वक्तव्यमिति ।** डसैव सिद्धत्वान्निपातनं न कर्तव्यमित्यर्थः ।

**वक्तव्यश्चेति ।** अवया इत्यादीनि प्रथमान्तान्येव निपात्यन्त इति 'श्वेतवोभ्या'मित्यादिरूपमन्यथा न स्यात् । अथापि पदमात्रविषयं निपातनमाश्रीयते, तथाप्यत उत्त्वं विधीयमानमाकारान्न स्यात् । तस्मात्संबुद्ध्यर्थं निपातनमपि कर्तव्यम् । डसप्युत्वार्थो वक्तव्यः । 'उक्थशा'इत्येतदपि संबुद्ध्यर्थं निपातनं कर्तव्यम् । 'उक्थशोभ्या'मित्यादिसिद्धये डसपि कर्तव्यः । ण्विनि हि नलोपे निपात्यमाने वृद्धौ सत्यामुत्वं न स्याद्यदि मन्त्रे दर्शनमस्ति । [ **मन्त्रे श्वेतवहोक्थ** ] ॥

---

उ.]शब्दे उपपदेऽदेरण्,उपपदस्य क्रव्यादेशः।पृषोदरादित्वादित्यत्र तु न भाष्यानुग्रहः, क्रव्यशब्देन तदबोधाच्च । एवञ्च 'क्रव्याद' इत्यसाध्वेवेति बहवः ॥

**मन्त्रे श्वेत ।** भाष्ये–**श्वेतवहादीनामिति ।** अनन्तरयोगे षष्ठी । **पदस्येत्यस्य** तदन्ते पदत्वस्य सम्भावनायामित्यर्थः । केचित्तु तत्संबन्धिनो ण्विनः स्थाने डस्वक्तव्य इत्यर्थ इत्याहुः । ननु डसुत्पत्तिवेलायां कथम्पदत्वमत आह–**भावीति ।** भाष्ये–**क्रियते वैर्थमिति ।** तेन हकारादीनामेव रुत्वमिति भावः । भाष्ये–**उक्थशस्शब्दस्येति ।** तत्प्रकृतिकस्येत्यर्थः । **तत्र वक्तव्य मिति ।** ननु 'वासरूप'-न्यायेन डस्विषये ण्विनोऽपि सत्त्वेन तदर्थं निपातनमावश्यकमिति चेन्न; एतद्भाष्यप्रामाण्येनाऽऽदेशपक्षस्यैवौचित्यात् । कैयटे 'डस्प्रत्यय'इति व्यवहारः स्थानिवद्भावलब्धप्रत्ययत्वेनेति बोध्यम् । **अवश्यं तद्वक्तव्यमिति ।** डसारम्भेऽपीत्यर्थः । **न तर्हीदानीमिति।** हादीनामेव रुत्वं विधेयम्, दीर्घस्तु ण्विनि वृद्ध्यैव सिद्ध इतिभावः। **अन्यथा**–डसभावे । **इत्येतदपि संबुद्ध्यर्थमिति ।** पदान्ते डसन्तत्वादिति भावः ।

ननु डसेव मास्तु, तत्राऽऽह–**उक्थशोभ्यामिति । यदि मन्त्रे इति ।** 'उक्थशस्शब्दस्ये'ति भाष्याच्छंसेर्नलोपोपधावृद्ध्यभावयोर्निपातनाच्छासेर्वोपधाह्रस्वनिपातनाद्वृद्ध्यभावे 'उक्थशोभ्या'मित्यस्य सिद्धेः, शासेर्विचि संबुद्धौ 'उक्थशा'

---

१ केचित्तु पृथग्वार्त्तिकतयेदं पठन्ति । २ इदं क्वचिन्न ।

[भवति] ॥ अवश्यं तद्वक्तव्यं दीर्घार्थम् ॥ नैतदस्ति प्रयोजनम् । सिद्धमत्र दीर्घत्वम् 'अत्वसन्तस्य चाधातो'रिति ॥ यत्र तेन न सिध्यति तदर्थम् ॥ क्व च तेन न सिध्यति ? ॥ संबुद्धौ हे श्वेतवा इति॥ न तर्हीदानीं डस्वक्तव्यः? ॥ वक्तव्यश्च ॥ किं प्रयोजनम् ? ॥*॥ उत्वार्थम् ॥*॥ श्वेतवोभ्यां श्वेतवोभिः ॥

## स्थः क च ॥ ३।२।७७ ॥

किमर्थं स्थः ककिपावुच्येते न क्विप्सिद्धोऽन्येभ्योपि दृश्यत इति, कश्च आतोऽनुपसर्गे क इति ? ॥ न सिध्यति । विशेषविहितः कः सामान्यविहितं क्विपं बाधते ॥ वासरूपेण क्विबपि भविष्यति ॥ इदं तर्हि–शंस्थः शंस्थाः॥ उक्तमेतत् 'शमि संज्ञायां धातुग्रहणं कृञो हेत्वादिषु टप्रतिषेधार्थ'-मिति । स यथैवाऽच्टं बाधते एवं ककिपावपि बाधेत ॥ [ स्थः क च ]॥

## सुप्यजातौ णिनिस्ताच्छील्ये ॥ ३।२।७८ ॥

सुपीति वर्तमाने पुनः सुब्ग्रहणं किमर्थम् ? ॥ अनुपसर्ग इत्येवं तद्भूत्,इदं सुम्मात्रे यथा स्यात्,–प्रत्यासारिण्य उदासारिण्य इति॥*॥णिन्विधौ

---

प्र.] स्थः क च । शंस्था इति । 'ईत्वमवकारादा'विति वचनाद्भाष्यकारवचनप्रामाण्याद्वा प्रत्ययलक्षणेनेत्वाऽभावः । [ स्थः क च ]।

---

उ.] इत्यस्याऽपि सिद्धेर्द्वयमपि न कार्यमित्यन्ये । [ मन्त्रे श्वेतवहोक्थ ] ।

स्थः क च।सप्तमीनिर्देशादेव तदादिविधौ लब्धे पुनर्वकारादाविति वचनं मुख्यवकारादिप्रतिपत्त्यर्थमिति वदन्तम्प्रत्याह–**भाष्यकारवचनेति** । यद्वा यावान इति प्रयोगस्य वनिपा सिद्धिमाश्रित्य तत्प्रत्याख्यानादाह–**भाष्येति** । अत एव 'ध्यायतेः सम्प्रसारण'मिति वार्तिके 'दधातेर्वा धी'रिति भाष्ये क्विप्यपीत्वं कृतम् । वस्तुतो भाष्ये क्विप्पदेन सादृश्याद्विजुच्यते इतीत्वाऽप्रसक्तिरेवाऽत्रेति बोध्यम् । भाष्ये–ककिपाविति । 'आतोऽनुपसर्गे'इति 'क्विप्चे'ति विहितौ। तत्र कस्य बाधे 'शंस्थ' इति न सिध्येत्तदर्थं स्थः को विधेयः । कस्य चाऽज्बाधकत्वेन क्विबपवादत्वाऽभावात्परत्वेन क्विपो नित्यबाधवारणाय क्विबपि विधेय इति भावः । न चाऽत्रैव 'शंस्था' इत्यस्य सिद्धत्वेन क्विपो बाधे फलाऽभावः । शंस्थाशब्दाच्छसि आतो लोपानापत्तेः । 'कृदति'ङिति .सूत्रस्थभाष्योक्तरीत्यैकादेशस्य स्थानिवत्त्वात् । 'पुरस्ता'दिति न्यायेन टस्यैव तेन बाध इति तु न शङ्क्यं, 'येन नाऽप्राप्ति'न्यायेन क्विप एव बाध इत्यस्याऽपि वक्तुं शक्यत्वात् । तस्माद्भाष्यसामान्यचिन्तयोभयोरपि स बाधकः स्यादिति तात्पर्यम्॥ [ स्थःक च ] ॥

---

१ इदं क्वचिन्न । २ अत्र 'श्वेतवादीनां डस् , उत्त्वार्थम्' इति वार्त्तिकशरीरमिति तु गौडाः । ३ 'बाधेत' ।

साधुकारिण्युपसङ्ख्यानम् ॥*॥ णिन्विधौ साधुकारिण्युपसङ्ख्यानं कर्तव्यम् । साधुकारी साधुदायी ॥*॥ ब्रह्मणि वदः ॥*॥ ब्रह्मणि वद उपसङ्ख्यानं कर्तव्यम् । ब्रह्मवादिनो वदन्ति ॥ [ सुप्यजातौ णिनिस्ताच्छील्ये ] ॥

## व्रते ॥ ३।२।८० ॥

किमुदाहरणम् ? ॥ अश्राद्धभोजी ॥ किं योऽश्राद्धं भुङ्क्ते सोऽश्राद्धभोजी ? ॥ किं चातः ? ॥ यदाऽसावश्राद्धं न भुङ्क्ते तदाऽस्य व्रतलोपः स्यात् । तद्यथा स्थायी । यदा न तिष्ठति तदास्य व्रतलोपो भवति ॥ एवं तर्हि णिन्यन्तेन समासो भविष्यति,—न श्राद्धभोजी अश्राद्धभोजीति ॥ नैवं शक्यम् । स्वरे हि दोषः स्यात् । अश्राद्धभोजीत्येवं स्वरः

---

प्र.] सुप्य । णिन्विधाविति । अताच्छील्यार्थमिदम् । एवं–'ब्रह्मणि वद'इति ।

व्रते । उदाहरणे विचार्यमस्तीति प्रश्नः—किमिति । यदाऽसाविति । ननु बुभुक्षाप्रयुक्तं श्राद्धाऽश्राद्धभोजनं प्रसक्तम् , तत्राऽश्राद्धं भुङ्क्त इत्यनेन श्राद्धभोजनं निषिध्यते। यथा 'पञ्च पञ्चनखा भक्ष्या' इति शशादिव्यतिरिक्तपञ्चनखभक्षणं निवर्त्यते तत्र[2] कथं व्रतलोपः स्यात् । 'स्थण्डिलस्थायी'त्यत्र तु स्थानविपरीतगमनाचरणे युक्तो व्रतलोपः। उच्यते। 'अश्राद्धं मया भोक्तव्य'मिति येन संकल्पः कृतः स यदा बुभुक्षायां सत्यां यस्मिन्नहन्यश्राद्धं न भुङ्क्ते तदा तस्य स्यादेव व्रतलोपः ।

न श्राद्धभोजीति। समासार्थं प्रक्रियावाक्यमिदं न तु लौकिकम्। न हि केवलः श्राद्धभोजिशब्दो व्रतविषय उपपद्यते । अश्राद्धभोजिशब्दस्यैव व्रतविषयत्वात् । एवं स्वर इति । अव्ययपूर्वपदप्रकृतिस्वरत्वेनाद्युदात्तं पदं स्यात् । कृदुत्तरपदप्रकृतिस्वरत्वेनाऽन्तोदात्तत्वं चेष्यत इत्यर्थः । ननु च 'णिनी'त्यनेन पूर्वपदाद्युदात्तत्वेनैव

---

उ.] सुप्यजातौ। भाष्ये–अनुपसर्ग इत्येवमिति। 'उपसर्गेऽपी'ति ग्रहणाज्ज्ञापकादित्यर्थः। एतेन 'सुब्ग्रहणमुपसर्गनिवृत्त्यर्थ'मिति वृत्तिकारोक्तमास्तम्।[सुप्यजातौ]।

व्रते । स्थायीत्यत्रेति । नन्वत्र कथं णिनिः सुप उपपदस्याऽभावादिति चेन्न, उत्तरसूत्राद्बहुलग्रहणमपकृष्य केवलादपि विधानेनाऽक्षतेः । 'उत्थित एवाऽद्य भविष्यामि न तूपवेक्ष्यामी'त्येवं संकल्परूपं व्रतमेतत् । 'तिष्ठन् मूत्रयत' इत्यादिवदुत्थाने स्थाधातुरत्रेति परे । ब्रह्मादिणिन्यन्तस्यैव वा प्रकरणाद्व्रतपरत्वम् । परिसङ्ख्यया पूर्वपक्षः, विधिमाश्रित्य परिहारः। यस्मिन्नहनीति। एकादश्यादौ। भाष्ये–तद्यथा स्थायीति।'स्थायी' त्यत्रोपपत्तिरुक्ता। 'आस्थायी'ति पदमन्ये । 'स्थण्डिलस्थायी'ति पाठ इति केचित्, तदुभयमपि भाष्यकैयटविरुद्धम् । व्रतविषय इति । न हि तादृशव्रतसम्भवः,व्रते णिनेः[3] प्रकृतत्वाच्च । प्रागुक्तसंकल्पस्त्वप्रसिद्ध

---

१ 'स्थण्डिलस्थायी यदा स्थण्डिले न तिष्ठति तदा' । २ 'तत्कथं' । ३ 'णिनः' ।

युक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥*॥ नञ्युक्तमिवयुक्तं चान्यस्मिंस्त-त्सदृशे कार्यं विज्ञायते। तथा ह्यर्थो गम्यते। तद्यथा 'अब्राह्मणमानये'त्युक्ते ब्राह्मणसदृशं पुरुषमानयति नासौ लोष्टमानीय कृती भवति। एवमिहापि-'अकर्तरी'ति कर्तृप्रतिषेधादन्यस्मिन्नकर्तरि कर्तृसदृशे कार्यं विज्ञास्यते ॥ किं चान्यदकर्तृ कर्तृसदृशम्?॥ कारकम् ॥*॥[उत्तरार्थं तु कारकग्रहणम्]॥*॥उत्त-रार्थं तर्हि कारकग्रहणं कर्तव्यम्। 'परिमाणाख्यायां सर्वेभ्यः'।कारके यथा स्या-दिह मा भूत्,-'एका तिलोच्छ्रितिः' 'द्वे सृती' इति। 'घञनुक्रमणमजब्वि-षये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान'मिति वक्ष्यति तन्न वक्तव्यं भवति ॥ एतदपि नास्ति प्रयोजनम्। अत्राप्यकर्तरीत्येवानुवर्तिष्यते ॥*॥ संज्ञाग्रहणानर्थक्यं च सर्वत्र घञो दर्शनात् ॥*॥ संज्ञाग्रहणं चानर्थकम् ॥ किं कारणम्?॥ 'सर्वत्र घञो दर्शनात्'। असंज्ञायामपि हि घञ्दृश्यते। को भवता दायो दत्तः। को भवता लाभो लब्ध इति ॥ यदि संज्ञाग्रहणं न क्रियतेऽतिप्रसङ्गो भवति। 'कृतः कट' इत्यत्र 'कारः कट' इति प्राप्नोति ॥ ॥*॥अतिप्रसङ्ग इति चेदभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम् ॥*॥ अतिप्रसङ्ग इति चेतन्न ॥ किं कारणम्?॥'अभिधानलक्षणत्वात्प्रत्ययस्य सिद्धम्'। अभिधान-लक्षणाः कृत्तद्धितसमासा अनभिधानान्न भविष्यन्ति। [ अकर्तरि च ] ॥

## परिमाणाख्यायां सर्वेभ्यः ॥ ३।३।२० ॥

सर्वग्रहणं किमर्थम्?॥ सर्वेभ्यो धातुभ्यो घञ्यथा स्यादजपोरपि विषये। एकस्तण्डुलनिश्चायः[6]। द्वौ शूर्पनिष्पावौ ॥*॥ सर्वग्रहणमनर्थकं परिमाणाख्या-

प्र.]रार्थमिति। तेन 'परिमाणाख्यायां सर्वेभ्य'इत्यनेन घञ्कारके भवति न तु भाव इति एका तिलोच्छ्रितिर्द्वे सृती इत्यत्र भावे घञोऽप्रसङ्गादेतदर्थं 'घञनुक्रमण'मि-त्यादि न वक्तव्यं भवति। [ अकर्त्तरि च कारके ] ॥

परिमाणा। अजपोरपीति। अन्यथा 'पुरस्तादपवादा' इति न्यायेनाऽचमेव

उ.]भेदो भाष्ये इति,शङ्कित्रतिरिक्तस्य च्छात्रस्य वाक्यमित्येके।भगवत एवेत्यन्ये। भाष्ये-नञिवयुक्तमिति। प्रसज्यप्रतिषेधात्पर्युदासो न्याय्य इति भावः। घञनु-क्रमणमित्यादीति। 'परिमाणाख्याया'मित्यादि घञ्विधानमजपोरेव बाधकं न तु स्त्रीप्रत्ययाना'मित्यर्थकं हि तद्वार्त्तिकमिति भावः। ननु 'परिमाणाख्याया'मित्यत्र 'कारके' इत्यनुवृत्तावपि कर्मणि क्तिनं बाधित्वा घञ्मा भूदित्यर्थं तदावश्यकमिति चेन्न, परिमाणाख्यायां भाव एव क्तिनं मन्यतेऽभिधानस्वाभाव्यादिति न दोषः ॥

परिमाणा। परिमाणं-परिच्छित्तिः, तस्या आख्यानं-कथनं तत्रेत्यर्थः।

१'इदं भाष्यमित्यन्ये'। २इदं लुप्तं। ३'श्रुती'। ४इदं क्वचिन्न।५'दनभि'।६'चायः'।

यामिति सिद्धत्वात् ॥*॥ **सर्वग्रहणमनर्थकम्** ॥ **किं कारणम्** ? ॥ **'परिमाणाख्यायामिति सिद्धत्वात्'।** 'परिमाणाख्याया'मित्येव घञ्सिद्धोऽजपोरपि विषये, **नार्थः सर्वग्रहणेन** ॥ **अस्त्यन्यदेतस्य वचने प्रयोजनम्** ॥ **किम्** ? ॥ **एकः पाकः द्वौ पाकौ त्रयः पाका इति** ॥ **पूर्वेणाप्येतत्सिद्धम्**॥ **न सिध्यति।** 'संज्ञाया'मिति पूर्वो योगो, नचैषा संज्ञा ॥ **प्रत्याख्यायते संज्ञाग्रहणम्** ॥ **अथापि क्रियते एवमपि न दोषः** । अजपावपि संज्ञायामेव। यथाजातीयक उत्सर्गस्तथाजातीयकेनाऽपवादेनापि भवितव्यम् ॥*॥ उत्तरार्थं तर्हि ॥*॥ [ उत्तरार्थं तर्हि वक्तव्यम् ]॥ **'इङश्च'।सर्वेभ्योपि यथा स्यात्।** ननु चायमिङ् एक एव वण्ठरण्डाकल्पः । **सर्वेषु साधनेषु यथा स्यात्** । उपेत्याऽधीयते तस्मादुपा-

---

प्र.]घञ्बाधेत नाऽपमिति भावः। **द्वौ शूर्पनिष्पावाविति।** यद्यप्यत्र 'निरभ्योः पूल्वो'रिति घञ्सिध्यति तथापि सर्वापवादार्थं सर्वग्रहणोपादानादनेनैव भवितुमर्हतीत्युपन्यासः । **सर्वग्रहणमिति** । बाध्यमात्रापेक्षायां समुदायापेक्षयां वा पुरस्तादपवादन्यायो नास्तीति भावः । **एकः पाक इति** । कर्मण्यपि घञ् भवतीति भावः । **सर्वेष्विति** । सर्वेभ्य इति तादर्थ्ये चतुर्थी, तेनायमर्थो गृह्यत इति भावः । तेना-

---

उ.] परिच्छित्तिश्च प्रत्ययार्थस्येति भावः । सा चैकादिशब्दैरुदाहरणेषु स्पष्टैव । पुनर्विधानादेवाऽजब्विषये भवतीत्यत आह-**अन्यथेति** । **उपादानादनेनैवेति** । 'परिमाणाख्याया'मित्यनेनैवेत्यर्थः। 'निरभ्योः पूल्वो'रिति च न कार्यमिति भावः । निश्चायनिष्पावौ कर्मणि घञन्तौ । 'तण्डुल'शब्देन 'शूर्प'शब्देन च तत्पुरुषः । निश्चीयतेः स भावसाधनो वा । **निश्चायो**-राशिः। अत्र राशेरेकत्वेन परिच्छेदः । निष्पूयते तुषाद्यपनयनेन स निष्पावस्तण्डुलराशिः । अत्राऽपि संख्यया परिच्छेदः । निश्चाये 'ग्रहवृद्रि'त्यप्राप्तिः। **बाध्यमात्राऽपेक्षायामिति** । सामान्यचिन्तायामिदम् । बाध्यविशेषचिन्तायामपि प्रकारविशेषमाह-**समुदायाऽपेक्षायां वेति** ।

ननु 'भावे' इत्यनेनैव सिद्धमत आह-**कर्मण्यपीति** । परिमाणज्ञापनार्थं भाष्ये एकादिपदोपादानम् । भाष्ये-**अथाऽपीति** । एवञ्च पाकादिशब्दानामसंज्ञात्वादकर्त्तरि चेत्यनेन न सिद्धमित्यर्थः । एवञ्चाऽसंज्ञार्थं 'परिमाणाऽऽख्याया'मित्यस्य चारितार्थ्यादजपोर्विषये घञर्थं 'सर्व'ग्रहणमावश्यकमिति भावः। समाधत्ते-**अजपावपीति** । एवञ्च 'तण्डुलनिश्चाय' इत्यादावप्यसंज्ञात्वादपोऽप्राप्तौ 'परिमाणाख्याया'मित्येव घञ्सिद्ध इति नार्थः सर्वग्रहणेनेत्यर्थः । अजपोः संज्ञाविषयत्वे युक्तिमाह-**यथाजातीयक इति** । अन्यथाऽसंज्ञायां तयोश्चारितार्थ्येन घञपवादत्वमेव न स्यादिति भावः । **वण्ठो**-मृतभार्यः। ननु धातुविशेषणा'त्सर्वेभ्य' इति पञ्चम्यन्तात् सर्वेष्विति कथं लभ्यतेऽत आह-**सर्वेभ्य इति** । **तादर्थ्ये इति** ।नन्वपादानेऽकर्त्तरि-

ध्यायः। अधीयते[1] तस्मिन्नध्यायः।' अध्यायन्यायोद्यावसंहारा[धारावाया]श्चे[2]'त्ये-
तन्निपातनं न कर्तव्यं भवति ॥ एतदपि नास्ति प्रयोजनम्। क्रियते न्यास
एव ॥ उत्तरार्थमेव तर्हि वक्तव्यम्। 'कर्मव्यतिहारे णच्स्त्रिया'मिति सर्वेभ्यो
यथा स्यात् ॥ एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत्-"कर्मव्यतिहारे स्त्री-
ग्रहणं व्यतिपाकार्थम्। पृथग्ग्रहणं[3] बाधकबाधनार्थं व्यावचोरीव्यावचर्च्यर्थम्।
तत्र व्यतीक्षादिषु दोषः,सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं चे"ति॥
उत्तरार्थमेव तर्हि।'अभिविधौ भावइनुण्'।सर्वेभ्यो यथा स्यात्। सांराविणम्॥

एतदपि नास्ति प्रयोजनम्। वक्ष्यत्येतत् "अभिविधौ भावग्रहणं नपुंसके
क्तादिनिवृत्त्यर्थम्। पृथग्ग्रहणं[3] बाधकबाधनार्थं, न तु ल्युट्" इति ॥ इदं तर्हि
प्रयोजनं,प्रकृत्याश्रयो योऽपवादस्तस्य बाधनं यथा स्यादर्थाश्रयो योऽपवादस्तस्य
बाधनं मा भूदिति। एका तिलोच्छ्रितिः। द्वे सृती[4] इति ॥ 'घञनुक्रमणमज-
ब्विषये, अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञान'मिति चोदयिष्यति तन्न
वक्तव्यं भवति। ॥*॥ घञनुक्रमणमजब्विषये ॥*॥ घञनुक्रमणमजब्विषय-
इति वक्तव्यम्। ॥*॥ अवचने हि स्त्रीप्रत्ययानामप्यपवादविज्ञानम् ॥*॥ अनु-
च्यमाने ह्येतस्मिन्स्त्रीप्रत्ययानामप्यपवादोऽयं विज्ञायेत। एका तिलोच्छ्रितिः,
द्वे सृती इति ॥*॥ दारजारौ कर्तरि णिलुक्च ॥*॥ दारजारौ कर्तरि वक्तव्यौ।

---

प्र.]धिकरणे घं बाधित्वा घञ् भवति। प्रकृत्याश्रय इति। 'सर्वेभ्य' इति पञ्चमी-
निर्देशादयमर्थो लभ्यत इति भावः। अर्थाश्रय इति। 'स्त्रिया'मित्यर्थं निर्दिश्य क्तिनो
विधानादर्थाश्रयत्वम्। एकेति। ननु कारकानुवृत्त्याऽत्र भावे घञ् न भविष्यति।
नैतदस्ति। उभयाधिकारात्। दारजाराविति। णिलोपे सति तस्य स्थानिवत्त्वा-
द्व्याश्रया वृद्धिर्न स्यादिति णिलुग्विधीयते। तस्य हि अपरनिमित्तकत्वात्, क्तिलुगु-

---

उ.] चं कारके इत्युक्तेः सिद्धमत आह-तेनाऽधिकरणे[इ]ति।अपादानन्तु दृष्टान्ता-
र्थमिति भावः। तदुदाहरणम्-अधीयते तस्मिन्नित्यध्याय इति। स्वाध्यायकाल इत्य-
र्थः। भाष्ये-णच्स्त्रियामिति सर्वेभ्य इति। 'व्यावचोरी'त्यादौ युजादिविषये-
ऽपीत्यर्थः। भाष्ये-कर्मव्यतिहारे इत्यादि। 'तत्र णज्विधायके सूत्रे 'स्त्री'ग्रहणं
'व्यतिपाको वर्त्तते' इत्यत्र णजभावाऽर्थम्, 'स्त्रियां क्तिन्'त्यतः पृथग्ग्रहणन्तु
'व्यावचोरी'त्यादौ 'ण्यासे'ति युजादीनां बाधकानां बाधनार्थम्, न च व्यतीक्षा-
दिषु 'गुरोश्च हल' इत्यस्याऽपि बाधप्रसङ्गः, 'स्त्रियां क्ति'न्नित्यधिकारे एव 'कर्मव्य-
तिहारे णच्', ततो 'णिच'इति न्यासेन सिद्धे'रिति तद्वार्त्तिकार्थः। इनुण्सर्वेभ्य
इति। 'सांराविण'मित्यादौ भावक्तादिविषयेऽपीत्यर्थः। अभिविधाविति। 'शब्द-

---

१ 'ऽस्मिन्न''अस्मिन्नधीयते इत्य'। २ क्वचिन्न।३ 'पृथक्तु'।४ 'सुती' 'श्रुती'।

णिलुक्च वक्तव्यः । दारयन्तीति दाराः । जारयन्तीति जाराः ॥*॥ करणे वा ॥*॥ करणे वा वक्तव्यौ । दीर्यन्ते तैर्दाराः । जीर्यन्ति तैर्जाराः । [ परिमाणा ] ।

## इङश्च ॥ ३।३।२१ ॥

॥*॥ इङश्चेत्यपादाने स्त्रियामुपसङ्ख्यानं तदन्ताच्च वा ङीष् ॥*॥ इङश्चेत्यत्रापादाने स्त्रियामुपसङ्ख्यानं कर्तव्यं, तदन्ताच्च वा ङीष्वक्तव्यः । उपेत्याऽधीयते तस्या उपाध्यायी । उपाध्याया । ॥*॥ शॄ वायुवर्णनिवृत्तेषु ॥*॥ 'शॄ' इत्येतस्माद्वायुवर्णनिवृत्तेषु घञ्वक्तव्यः । शारो वायुः । शारो वर्णः । 'गौरिवाऽकृतनीशारः प्रायेण शिशिरे कृशः' । [ इङश्च ] ॥

## समि मुष्टौ ॥ ३।३।३६ ॥

॥*॥ समि मुष्टावित्यनर्थकं वचनं परिमाणाख्यायामिति सिद्धत्वात् ॥*॥

---

प्र.]पधात्वेति प्रतिषेधाद्वा स्थानिवत्त्वाऽभावाज्जारशब्दः सिध्यति । करणे वेति । अण्यन्तयोरेव दृणातिजीर्यत्योः करणे घे प्राप्ते घञेवोच्यत इत्यर्थः। [अकर्त्तरि च]॥

इङश्च । प्रकृत्याश्रयस्यैवाऽचो घञा बाधकेन भाव्यम् , न त्वर्थाश्रयस्यापि क्तिन इति मत्वाह—इङश्चेति । शॄ वाय्वित्ति । 'ऋदोर'बिति प्राप्ते वचनम् । शार इति कर्मणि घञ् । अकृतनीशार इति । अकृताच्छादन इत्यर्थः । [ इङश्च ]॥

समि मुष्टौ । परिमाणवाचिमुष्टिशब्दाश्रयेण पूर्वः पक्षः । अङ्गुलिसंनिवेश-

---

उ.]शक्तिस्वभावाद्भावे एवेनुण्सिद्धौ 'भाव'ग्रहणं 'वाऽसरूप'न्यायेन पक्षप्राप्तक्तादिनिवृत्त्यर्थम् । 'नपुंसके भावे' इत्यनन्तरमेव वक्तव्ये पृथग्ग्रहणन्तु क्तस्य बाधकानां खलर्थानामपि बाधनार्थम्पूर्वविप्रतिषेधेनेति भावः । क्तवल्ल्युटो बाधस्तु नेष्यत इत्यत आह—न तु ल्युट इती'त्येतद्वार्त्तिकार्थः । उभयाऽधिकारादिति । परिमाणाख्यायां भावेऽपीष्टेरिति भावः । उदाहरणयोर्भावे क्तिन्, पूर्वसूत्रस्थभाष्यस्वरसात् । वञाश्रयेति । ण्याश्रयायान्तु'जनीजॄष्क्नस्वि'ति मित्त्वेन 'जार'शब्दे ह्रस्वापत्तिरिति भावः । ननु जॄणातिरपि क्र्यादौ पठ्यते, अत एव तद्व्यावृत्तये 'जनीजॄ'षिति गणसूत्रे षकारोच्चारणम् । एवञ्च तस्याऽमित्त्वेन तस्माद्घञि णिलोपेनाऽपि सिद्धं जार इतीति चेन्न, मितो 'जर' इति रूपव्यावृत्त्यर्थत्वात् । दारयतेर्यद्यपि पचाद्यचा सिद्धं तथापि 'अच्कावशक्ता'विति स्वरव्यावृत्तय इदम् । करणे घे इति । 'पुंसि संज्ञायां घ' इत्यनेन । इदमुपलक्षणं ल्युटोऽपि ॥ [ परिमाणा ] ।

इङश्च। ननु सूत्रेणैव सिद्धमत आह—प्रकृत्येति।सजातीयत्वादित्यर्थः।तथा च स्त्रियां क्तिनो बाधार्थमिति भावः।कर्मणीति।हरदत्तस्तु 'करणे'इत्याह,निव्रियतेऽनेनेइति निवृतम्—आच्छादनम् । बाहुलकात्करणे क्तः। तदाह—अकृताच्छादन इति ॥

---

१ 'जरयन्तीति' । २.'तेन दाराः' 'तेन जाराः' । ३ 'अस्या' । ४'बाधनार्थं' ।

समि मुष्टाविति वचनमनर्थकम् ॥ किं कारणम् ? ॥ 'परिमाणाख्यायामिति सिद्धत्वात्' ॥ 'परिमाणाख्याया'मित्येवात्र घञ्सिद्धः ॥*॥ अपरिमाणार्थं तु ॥*॥ अपरिमाणार्थोऽयमारम्भः । मल्लस्य सङ्ग्राहः । मुष्टिकस्य सङ्ग्राह इति । ॥*॥ उद्ग्राभनिग्राभौ च च्छन्दसि स्रुगुद्यमननिपातनयोः ॥*॥ उद्ग्राभो निग्राभ इतीमौ शब्दौ छन्दसि वक्तव्यौ,स्रुगुद्यमननिपातन[योरर्थ]योः।उद्ग्राभं च निग्राभं च ब्रह्म देवा अवीवृधन् ॥ [ समि मुष्टौ ] ॥

## कर्मव्यतिहारे णच्स्त्रियाम् ॥ ४।३।४३ ॥

स्त्रीग्रहणं किमर्थम् ? ॥*॥ कर्मव्यतिहारे स्त्रीग्रहणं व्यतिपाकार्थम् ॥*॥ कर्मव्यतिहारे स्त्रीग्रहणं क्रियते ॥ [किं प्रयोजनम् ?॥] 'व्यतिपाकार्थम्'। इह मा भूत् ,-व्यतिपाको वर्तते ॥

अथ किमर्थं पृथग्ग्रहणं ? ॥*॥ पृथग्ग्रहणं बाधकबाधनार्थम् ॥*॥ पृथग्ग्रहणं क्रियते॥[किं प्रयोजनम् ?]॥ 'बाधकबाधनार्थं'। ये तस्य बाधकास्तद्बाधनार्थम् ॥ किं प्रयोजनम् ? ॥*॥ व्यावचोरीव्यावचर्च्यर्थम् ॥*॥ [व्यावचोरी-व्यावचर्च्यर्थम् ] । व्यावचोरी वर्तते । व्यावचर्ची वर्तते ॥*॥ तत्र व्यतीक्षादिषु दोषः ॥*॥ तत्र व्यतीक्षादिषु दोषो भवति । व्यतीक्षा वर्तते । व्यतीहा वर्तते । ॥*॥ सिद्धं तु प्रकृते स्त्रीग्रहणे णज्ग्रहणं णिज्ग्रहणं च॥*॥सिद्धमेतत्॥

---

प्र.]वाच्याश्रयेण तु परिहारः । [ समि मुष्टौ ] ॥

कर्म । पृथग्ग्रहणमिति । प्रकरणोत्कर्षात् क्तिनो बाधकानामप्यनेन बाधनमिति भावः । व्यतीक्षादिष्विति । 'अप्रत्ययात्' 'गुरोश्च हल' इत्यकारस्यापि बाधप्रसङ्गादित्यर्थः । सिद्धं त्विति । यद्येवं व्यावकुष्टिरिति क्तिन्न प्राप्नोति ।

---

उ.] समि मुष्टौ । अङ्गुलीति । दृढमुष्टिताऽनेनाऽन्वाख्यायते । मुष्टिकस्येति भाष्ये । 'मुष्टौ कुशल' इत्यर्थे आकर्षादित्वात्ष्ठल् । निपातनम्-अधः पातनम् ॥

कर्मव्य । भाष्ये-व्यतिपाकार्थमिति । पुंल्लिङ्गे भावे मा भूदित्यर्थमित्यर्थः । अकर्तृकारके तु नाऽनभिधानादिति भावः।प्रकरणोत्कर्षादिति।'स्त्रियां क्तिन्नि'त्येतदपेक्षयेति भावः। बाधकानामिति। 'व्यावचोरी'त्यादौ 'ण्यासे'ति युजादीनामित्यर्थः । अत्रेदं बोध्यम्-क्तिनोऽयमपवादः,अत एव पक्षे वासरूपविधिना सोऽपि । अन्येषां तदपवादानान्तु पृथक् पाठेन पूर्वविप्रतिषेधकल्पनया बाधकः। अत एव व्यतीक्षाया असिद्धिः शङ्किता भाष्ये, विप्रतिषेधविषये वाऽसरूपाऽप्रवृत्तेः । णिज्ग्रहणञ्चेति । इदं 'व्यावचोरी'त्यादौ बाधकबाधनार्थम् । व्यावक्रुष्टिरिति । स्पष्टश्चाऽयमप्रयोगो वाऽसरूपसूत्रे । 'व्यात्युक्षी'ति च माघकाव्ये । क्तिन्नेति । स्त्र्यधिकारे वाऽसरूप-

---

१'वित्येतद्वच'। २'मित्येव सिद्ध''मिति सिद्धं।३ 'योरर्थयोः।४ क्वचिन्न।५ 'पृथक्तु'।

कथम् ?॥ प्रकृत एव स्त्रीग्रहणेऽयं योगः कर्तव्यः। 'स्त्रियां क्तिन्'। ततः 'कर्मव्यतिहारे णच्'। ततो 'णिचः'॥ [ कर्मव्यतिहारे णच् ] ॥

## अभिविधौ भाव इनुण् ॥३।३।४४॥

भावग्रहणं किमर्थम् ? ॥*॥ अभिविधौ भावग्रहणं नपुंसके क्तादिनिवृत्त्यर्थम् ॥*॥ अभिविधौ भावग्रहणं क्रियते॥ [किं प्रयोजनम् ]॥ 'नपुंसके क्तादिनिवृत्त्यर्थम्'। नपुंसकलिङ्गे भावे क्तादयो मा भूवन्निति ॥ अथ किमर्थं पृथग्ग्रहणं क्रियते ? ॥*॥ पृथग्ग्रहणं बाधकबाधनार्थम् ॥*॥ पृथग्ग्रहणं क्रियते ॥ [ किं प्रयोजनम्? ] ॥ 'बाधकबाधनार्थम्'। ये तस्य बाधकास्तद्बाधनार्थम्। ॥*॥ न तु ल्युटः ॥*॥ ल्युटो बाधनं नेष्यते सङ्कूटनमित्येव भवति ॥

## एरच् ॥ ३।३।५६ ॥

॥*॥ अज्विधौ भयस्योपसङ्ख्यानम् ॥*॥ अज्विधौ भयस्योपसङ्ख्यानं कर्तव्यम्। भयम् ॥ अत्यल्पमिदमुच्यते 'भयस्ये'ति। ॥*॥ भयादीनामिति

प्र.]व्यात्युक्षी च न सिध्यति। नैष दोषः।'कृत्यल्युटो बहुल'मिति बहुलवचनाद्यथेष्टलाभप्रयोजनात्। [ कर्मव्यतिहारे णच् ] ॥

अभिविधौ। भावे कारक इति द्वयेऽपि प्रकृते शब्दशक्तिस्वाभाव्याद्भाव एवेनुणभविष्यतीति मत्वाह–भावग्रहणमिति। नपुंसक इति। 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्त' इति इनुण् घञमेव बाधेत न तु क्तादीन्।भावग्रहणात्त्वधिकविधानार्थात्तानपि बाधत इति भावः। अथेति। 'नपुंसके भाव' इत्यस्यानन्तरमिदं वक्तव्यमिति भावः। पृथग्ग्रहणमिति। 'वासरूपोऽस्त्रिया'मिति वचनात्पक्षे क्तादयःस्युरिति

उ.]विधेरभावाद्व्यात्युक्ष्यामपवादविप्रतिषेधेन 'गुरोश्चे'त्यप्रत्ययप्रसङ्गादिति भावः। एवञ्च 'वाऽसरूप'सूत्रस्थप्रयोगाऽनुष्ठानरूपभाष्यविरोधात् सिद्धन्त्वित्याद्येतत्सूत्रस्थवार्त्तिकमेकदेश्युक्तिरिति भावः। व्यावचोरीव्यतीक्षे बहुलग्रहणात्साध्ये इति तात्पर्यम्। उत्तरन्तु–स्त्रियामित्यकरणप्रयुक्तलाघवाद्बाहुलकस्य तवाऽप्यावश्यकत्वाच्च वार्त्तिकोक्तमेव युक्तमिति ॥ [ कर्मव्यतिहारे णच् ]।

अभिविधौ। द्वये अपि प्रकृते इति। प्रकरणे इत्यर्थः। 'द्वयोरपि प्रकृते' इति पाठान्तरम्। भाव एवेति। णज्वदिति भावः। मध्येऽपवादा इति। बाध्यसामान्यचिन्तयेदं सिद्धमिति 'वाऽसरूप'न्यायेन पक्षे प्राप्तयोरपि तयोर्बाधनार्थं भावग्रहणमिति भाष्याऽभिप्रायवर्णनमुचितम्। वाऽसरूप इति। स्त्र्यधिकारे एव 'वाऽसरूप'निषेध इति प्राक् प्रतिपादनादिति भावः। भाष्ये–ये तस्येति। क्तस्य बाधकाः खलर्था इत्यर्थ उचितः। कैयटोक्तार्थे नाऽक्षरस्वारस्यं, भावग्रहणफलादविशे-

१इदं लुप्तं। २'पृथक्तु'। ३ इदं भाष्यमित्यन्ये। ४ प्रयोजकात्'। ५ द्वयोरपि'।

वक्तव्यम् ॥*॥ इहापि यथा स्यात् भयं वर्षम् ॥ किं प्रयोजनम् ? ॥*॥ नपुंसके क्तादिनिवृत्त्यर्थम् ॥*॥नपुंसलिङ्गे भावे क्तादयो मा भूवन्निति ॥*॥कल्पादिभ्यश्च¹ प्रतिषेधः ॥*॥ कल्पादिभ्यः प्रतिषेधो वक्तव्यः । कल्पः अर्थः मन्त्र [ इति ] । ॥*॥ जवसवौ छन्दसि ॥*॥ जवसवौ छन्दसि वक्तव्यौ । ऊर्वोरस्तु मे जवः । अयं मे पञ्चौदनः सवः । [ एरच् ] ॥

## ग्रहवृदनिश्चिगमश्च ॥ ३।३।५८ ॥

किमर्थं निष्पूर्वाच्चिनोतेरब्विधीयते नाऽचैव² सिद्धं, न ह्यस्ति विशेषो निष्पूर्वाच्चिनोतेरपो वा, अचो वा, तदेव³ रूपं स एवं [च] स्वरः॥ न सिध्यति 'हस्तादाने चेरस्तेये'⁴ इति घञ्प्राप्नोति तद्बाधनार्थम्। अत उत्तरं पठति॥*॥ अब्विधौ निश्चिग्रहणमनर्थकं स्तेयस्य घञ्विधौ प्रतिषेधात्॥*॥ अब्विधौ निश्चिग्रहणमनर्थकम् ?॥ किं कारणम् ॥ 'स्तेयस्य घञ्विधौ प्रतिषेधात्' । स्तेयस्य घञ्विधौ प्रतिषेध उच्यते । निष्पूर्वश्चिनोतिः स्तेये वर्त्तते ॥ [॥*॥ अस्तेयार्थन्तु ॥*॥] अस्तेयार्थं तर्हीदं वक्तव्यं निष्पूर्वाच्चिनोतेरस्तेयेऽब्यथा⁶ स्यात् । ॥*॥अस्तेयार्थमिति चेन्नाऽनिष्टत्वात्॥*॥अस्तेयार्थमिति चेत्तन्न॥किं कारणम्?॥ 'अनिष्टत्वात्'। नहि निष्पूर्वाच्चिनोतेरस्तेयेऽबिष्यते॥ किं तर्हि?॥ घञेवेष्यते ॥ एवं तर्हि सिद्धे सति यन्निष्पूर्वाच्चिनोतेरपं शास्ति तज्ज्ञापयत्याचार्यो यत्तदन्तः-

---

प्र.]प्रकरणोत्कर्षेण वासरूपविधिर्बाध्यत इत्यर्थः । [ अभिविधौ भावे ] ॥

**एरच्** । **वर्षमिति** । वर्षणमित्यपि भवति । 'वृषभो वर्षणा'दिति भाष्यकारवचनात् । **कल्प इति** । ण्यन्तेभ्योऽचि प्रतिषिद्धे घञेव भवति। 'एरजण्यन्ताना'मिति तु वचनमनार्षम् । **जवसवाविति** । अपि प्राप्तेऽज्विधिः । स्वरे विशेषः ।

**ग्रहवृ** । **एष स्वर इति** । मध्योदात्तत्वं कृत्स्वरेण भवति । **वशिरण्योरिति**।

---

उ.]षश्च। अत्राऽप्येवंकरणात्पूर्वविप्रतिषेधकल्पनेति तात्पर्यम् । **सङ्कूटनमित्येवेति** । सङ्कूटनमिति भवत्येवेत्यन्वयः । अत एव 'पुंयोगा'दिति सूत्रस्थः 'सांकूटिन'मिति भाष्यप्रयोगः सङ्गच्छते ॥ [ अभिविधौ ]

**एरच्** । **भाष्यकारवचनादिति** । ततो बाहुकाल्ल्युडपीति भावः । **स्वरे इति** । अपि आद्युदात्तम्, अच्यन्तोदात्तमित्यर्थः ॥ [ एरच् ] ।

**ग्रहवृ** । भाष्ये **स एव[च]स्वर इति**।'थाऽथघ'ञिति सूत्रेणेति भावः।भाष्ये–**स्तेये वर्त्तते इति** । हस्तादानविषये इति भावः। **किन्तर्हि घञेवेति**। हस्ताऽऽदानविषये इत्यर्थः । 'प्रकृतसूत्रे 'निश्चि'ग्रहणं स्तेयार्थश्चेद्घञोऽप्राप्तेरचैव सिद्धम् ।

---

१ 'कल्प्यादिभ्यः प्रति' । २ इतिः क्वचिन्न । ३ 'एवाऽस्य' । ४ 'चेर्घञ्प्राप्तस्तद्बा' । ५ इदं लुप्तं स्यात् । ६ 'ये यथा' ।

थाथघञ्क्ताजबित्रकाणामिति[2] तन्निष्पूर्वाच्चिनोतेर्न भवतीति ॥ किमेतस्य ज्ञापने प्रयोजनम् ?॥ निश्चयः । एष स्वरः सिद्धो भवति ॥*॥ वशिरण्योश्चोपसङ्ख्यानम् ॥*॥ वशिरण्योश्चोपसङ्ख्यानं कर्तव्यम् । सवशं सैन्धवम् । धनंजयं रणे रणे ॥*॥ घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम् ॥*॥ घञर्थे को विधेयः ॥ किं प्रयोजनम् ? ॥ 'स्थास्नापाव्यधिहनियुध्यर्थम्' । स्था–प्रतिष्ठन्तेऽस्मिन्धान्यानीति प्रस्थः । प्रस्थे हिमवतः शृङ्गे । स्था ॥ स्ना–प्रस्नान्ति तस्मिन्निति प्रस्नः । स्ना । पा–प्रपिबन्त्यस्यामिति[2] प्रपा । पा ॥ व्यधि–आविध्यन्ति तेनाऽऽविधम्[3] । व्यधि ॥ हनि–विघ्नन्ति तस्मिन्मनांसि विघ्नः । हनि ॥ युधि–आयुध्यन्ते तेनाऽऽयुधम् ॥ [ ग्रहवृद्दनिश्चि ] ।

## स्तम्बे क च ॥ ३।३।८३ ॥

कस्मादयं को विधीयते ?॥ 'हन्ते'रित्याह ॥ तद्धन्तिग्रहणं कर्तव्यम् ?॥ न कर्तव्यम् । प्रकृतमनुवर्तते ॥ क्व प्रकृतम् ? ॥ 'हनश्च वध' इति ॥ तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितुम् ॥ नैतानि निपातनानि । हन्तेरेते आदेशाः ॥ यद्यादेशा घनस्वरो न सिध्यति । घनः[4] ॥ सन्तु तर्हि निपातनानि ॥ ननु चोक्तं 'तद्वा अनेकेन निपातनेन व्यवच्छिन्नं न शक्यमनुवर्तयितु'मिति ॥ संबन्धमनुवर्तिष्यते ॥ अथ वा पुनः सन्त्वादेशाः ॥ ननु चोक्तं 'स्वरो न सिध्यती'ति ॥ नैष दोषः । अकारान्ता आदेशाः॥ अथ यदेषीकया स्तम्बो हन्यते कथं तत्र भवितव्यम् ? ॥ के चित्तावदाहुः–'स्तम्बघ्ने'-

---

प्र.]घञि प्राप्ते वचनम् । वशनं वशः। रणन्त्यस्मिन्निति[5] रणः । घञर्थ इति। भावः कर्तृवर्जितं च कारकं घञर्थः । [ ग्रहवृद्दनिश्चिगमश्च ] ।

**स्तम्बे क च । घनस्वर इति** । अन्तोदात्तत्वं न सिध्यति, अप्स्वरेणाद्युदात्तत्वप्रसङ्गादित्यर्थः । **अकारान्त इति** । तत्राऽतो लोपे कृते उदात्तनिवृत्तिस्वरेणाप

---

उ.]अस्तेयार्थं चेत्तन्न, निःपूर्वचिनोतेः पूर्वविप्रतिषेधेन घञ एवेष्टे'रिति भाष्यार्थः। **घञ् चेति** पाठे 'च'शब्द एवार्थो द्रष्टव्यः। **कृत्स्वरेणेति** । 'गतिकारकोपपदा'दिति विहितेन ॥ [ ग्रहवृद्दनिश्चिगमश्च ] ।

**स्तम्बे क च । अनेकेनेति** । घनाऽन्तर्घनप्रघणप्रघाणोद्घनाऽपघनरूपेणेत्यर्थः । **अप्स्वरेणाद्युदात्तेति** । निपातने तु निपातनात् 'फिषोऽन्त' इति सिद्धिरिति भावः । **तत्राऽतो लोप इति** । प्रत्ययसन्नियोगशिष्टतया विधानादार्द्धधातुक इति लोप इति भावः। आदेशाश्च स्थानिस्वरेणान्तरतम्यादन्तोदात्ता इति तात्पर्यम् । **तस्य सर्वाऽपवादत्वादिति** । यद्यपि पुंस्ययं चरितार्थस्तथापि 'बहुल'ग्रहणादिति

---

१ 'अस्मिन्' । २ इतिः क्वचिन्न । ३'आविधः' । ४ 'घन इति' । ५ 'रणति' ।

ति भवितव्यम् ॥ अपर आहुः-'स्तम्बहेति'रिति भवितव्यम्, ऊतियूति-जूतिसातिहेतिकीर्तयश्चेति निपातनमिति। अपर आहुः-स्तम्बहननीति भवितव्यमिति।वक्ष्यत्येतत्"अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेने"ति।

## यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३।३।९० ॥

॥*॥ यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेधः ॥*॥ ॥*॥ यजादिभ्यो नस्य ङित्त्वे संप्रसारणस्य प्रतिषेधो वक्तव्यः। प्रश्न इति ॥ एवं तर्ह्यङित्करिष्यते ॥*॥ अङिति गुणप्रतिषेधः ॥*॥ यद्यङिद्गुणस्य प्रतिषेधो वक्तव्यः। विश्न इति। सूत्रं च भिद्यते ॥ यथान्यासमेवास्तु। ननु चोक्तं 'यजादिभ्यो नस्य ङित्त्वे संप्रसारणप्रतिषेध' इति ॥ नैष दोषः [ ॥*॥ निपातनात्सिद्धम् ॥*॥ ] निपातनादेतत्सिद्धम् ॥ किं निपातनम्?॥प्रश्ने चासन्नकालइति॥

## स्त्रियां क्तिन् ॥ ३।३।९४ ॥

॥*॥ स्त्रियां क्तिनाबादिभ्यश्च ॥*॥ स्त्रियां क्तिनित्यत्राबादिभ्यश्चेति वक्तव्यम्। आप्तिः। राद्धिः। दीप्तिः॥*॥निष्ठायां वा सेटोऽकारवचनात् [सिद्धं]॥*॥ निष्ठायां वा सेटोऽकारवचनात्सिद्धम्। अथ वा निष्ठायां सेटोऽकारो भवतीति वक्तव्यम् ॥ यदि निष्ठायां सेटोऽकारो भवतीत्युच्यते स्रंसा ध्वंसेति न सिध्यति। स्रस्तिः ध्वस्तिरिति प्राप्नोति ॥ किं पुनरिदं परिगणनं त्रय एवाबादय आहो स्विदुदाहरणमात्रम् ?॥ किं चातः ? ॥ यदि परिगणनं भेदो भवति। अथोदाहरणमात्रं नास्ति भेदः। स्रस्तिः ध्वस्तिरित्येव भवितव्यम् ॥

## स्थागापापचो भावे ॥३।३।९५॥

॥*॥ स्थादिभ्यः सर्वापवादप्रसङ्गः ॥*॥ स्थादिभ्यः सर्वापवादः क्तिन्-

प्र.]उदात्तत्वं भवतीति भावः। स्तम्बघ्नेति कप्रत्यये रूपं। तस्य सर्वापवादत्वादिति भावः। स्तम्बहेतिरिति। निपातनस्य सर्वापवादत्वादिति भावः ॥

स्त्रियां क्तिन्। स्रस्तिरिति। स्रंसा ध्वंसेति नैव भवतीति भावः।

स्थागापा। स्थादिभ्य इति। बाध्यमात्रापेक्षायां, बाध्यसमुदायापेक्षायां वा

उ.]भावः। भाष्ये-अजब्भ्यामिति। 'हेति'रिति निपातनमप्रकरणे चारितार्थमिति भावः। निपातितहेतिशब्दः शस्त्रे रूढ इत्यन्ये ॥ [ स्तम्बे क च ]।

स्त्रियां क्तिन्।क्तिन्नाबादिभ्य इति वचनं 'गुरोश्च हल' इत्येतत्प्राप्तियोग्यविषयं, 'निष्ठायां वा सेटोऽकारवचना'दित्यनेन समानयोगक्षेमत्वादित्याहुः। एवञ्च निष्ठाया-मनिटस्तत्सूत्रप्राप्तिविषया आबादय इति फलितम् ॥ [ स्त्रियां क्तिन् ] ॥

१ 'निपातनादिति'। २ इदं क्वचिन्न। ३ 'क्तिन्नाबा'। ४ केचित्तु सिद्धत्यमिन्त-मिदं वार्तिकमित्याहुः।

प्राप्नोति, स यथैवाऽङं बाधते एवं ण्वुलिञावपि बाधेत । कां त्वं स्थायिका-[1]मस्थाः। कां त्वं[2] स्थायिम्[3] ॥*॥ सिद्धं त्वङ्विधाने स्थादिप्रतिषेधात् ॥*॥ सिद्ध-मेतत् ॥ कथम् ?॥[अङ्विधाने 'स्थादि[2]प्रतिषेधात्'॥]अङ्विधाने एव स्थादीनां प्रतिषेधो वक्तव्यः । प्रतिषिद्धे तस्मिन् क्तिनेव भविष्यति ॥ सिध्यति । सूत्रं तर्हि भिद्यते ॥ यथान्यासमेवास्तु । ननु चोक्तं 'स्थादिभ्यः सर्वापवादप्रसङ्ग' इति ॥ नैष दोषः। 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरा[3]'नित्येव-मयं स्त्रियां क्तिन्नङं बाधिष्यते ण्वुलिञौ न बाधिष्यते ॥

॥*॥ श्रुय[4]जीषिस्तुभ्यः करणे ॥*॥ श्रुयजीषिस्तु[4]भ्यः करणे क्तिन्वक्तव्यः। श्रूयतेऽनयेति श्रुतिः । इज्यतेऽनयेति इष्टिः । इष्यतेऽनयेति इष्टिः । स्तूयते-ऽनयेति स्तुतिः ॥*॥ ग्ला[म्लौ[2]]ज्याहाभ्यो निः ॥*॥ ग्ला[म्लौ[2]]ज्याहाभ्यो निर्वक्तव्यः । ग्लानिः [म्लानिः] ज्यानिः हानिः ॥ [ स्थागापापचो ] ।

## व्रजयजोर्भावे क्यप् ॥ ३।३।९८ ॥

॥*॥ क्यब्विधिरधिकरणे च ॥*॥ क्यब्विधिरधिकरणे चेति वक्तव्यम् । समजन्ति तस्यां समज्या ॥[ व्रजयजोर्भावे ] ।

## कृञः श च ॥ ३।३।१०० ॥

॥*॥कृञः श चेति वावचनं क्तिन[5]र्थम्॥*॥ कृञः श चेति वावचनं कर्त-व्यम् ॥ [ किं प्र[2]योजनम् ? ॥ 'क्तिन[3]र्थम्'] । क्तिन्नपि यथा स्यात् । कृतिः ॥

## इच्छा ॥ ३।३।१०१ ॥

किं निपात्यते ? ॥*॥ इषेः शे यगभा[6]वः ॥*॥ अत्यल्पमिदमुच्यते

---

प्र.]पुरस्तादपवादन्यायो नास्तीति भावः।ण्वुलिञाविति। 'विभाषाख्यानपरिप्रश्नयो'-रित्यनेन विहितौ । पुरस्तादिति । अनन्तरबाधने लब्धावकाशो विधिः परत्वादुत्त-रेण बाध्यत इत्यर्थः[7] । श्रुयजीति । ल्युड्बाधनार्थं वचनम् । [स्थागापापचो] ।

व्रजयजो । क्यब्विधिरिति । उत्तरसूत्रे इति भावः । [व्रजयजो] ।

कृञः श च। चकारेणानन्तरस्य क्यप एव समुच्चयो न तु व्यवहितस्य क्तिन इति मत्वाह—वावचनमिति । तेन क्रिया कृत्या कृतिरिति रूपत्रयसिद्धिः ॥

---

उ.] स्थागापा । बाध्यमात्रेति । बाध्यसामान्यचिन्तेयम् । बाध्यसमुदायेति । विशेषचिन्तायामपि प्रकारविशेषः । [ स्थागापा ] ॥

व्रजयजो। उत्तरेति ।भाष्ये तद्विषयोदाहरणदानादिति भावः। [व्रजयजो] ॥

कृञः श च । वा वचनमिति । इदमेव ज्ञापयति 'वर्णगौरवादपि योग-

---

१ 'आस्थाः'।२इदं क्वचिन्न ।३'कां त्वं स्थायिमास्थाः'।४ 'जिषि'।५इतिः क्वचिन्न । ६ 'इषेः शे यगभावो निपात्यते' इत्यस्यव्याख्या। इदं भाष्यमित्यन्ये। ७'इतिभावः'।

इच्छेति॥[*॥इच्छापरिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानम् ॥*]॥ इच्छा-परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसङ्ख्यानं कर्तव्यम् ॥*॥ जागर्तेरकारो वा ॥*॥ जागर्या । जागरा ॥ [ इच्छा ] ॥

## षिद्भिदादिभ्योऽङ् ॥ ३।३।१०४ ॥

॥*॥ भिदा विदारणे ॥*॥ भिदा विदारण इति वक्तव्यम् । भित्ति-रन्या ॥*॥ छिदा द्वैधीकरणे ॥*॥ छिदा द्वैधीकरण इति वक्तव्यम् । छित्ति-रन्या ॥*॥ आरा शस्त्र्याम् ॥*॥ आरा शस्त्र्यामिति वक्तव्यम् । आर्तिरन्या । ॥*॥ धारा प्रपाते ॥*॥ धारा प्रपात इति वक्तव्यम् । धृतिरन्या ॥*॥ गुहा गिर्योषध्योः ॥*॥ गुहा गिर्योषध्योरिति वक्तव्यम् । गूढिरन्या । [षिद्भिदा] ॥

## ण्यासश्रन्थो युच् ॥ ३।३।१०७ ॥

किमर्थश्चकारः ? ॥ ॥*॥ [ चकारः ] स्वरार्थः ॥*॥ 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात् ॥ नैतदस्ति प्रयोजनम् । 'उदात्त' इति वर्तते 'भूवीरा उदात्त' इति ॥ यद्युदात्त इति वर्तते 'व्रजयजोर्भावे क्यप्'–किमर्थः पकारः ? ॥ तुगर्थः । ह्रस्वस्य पिति कृतीति ॥ उदात्त इति वर्तते ॥ एव-मपि कुत एतत्तदन्तस्योदात्तत्वं भविष्यति न पुनरादेरिति ? ॥ उदात्त इत्य-नुवर्तनसामर्थ्याद्यस्याऽप्राप्तः स्वरस्तस्य भवति ॥ कस्य चाऽप्राप्तः ?॥ अन्त्य-स्य ॥ सामान्यग्रहणाऽविघाताऽर्थस्तर्हि ॥ क्व सामान्यग्रहणाविघातार्थे-नार्थः ? ॥ युवोरनाकाविति ॥ एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्–

---

प्र.] षिद्भिदादि॥ आर्तिरिति । आङोऽर्तेश्च 'उपसर्गादृति धाता'विति वृद्धिरेका-देशः । गुहा गिर्योषध्योरिति । गिरिशब्दोऽत्र गिर्यवयवे वर्तते । [ षिद्भिदा ]।

ण्यासश्रन्थो ॥ युवोरिति । अन्यथा निरनुबन्धकत्वादस्यैव ग्रहणं स्यान्नतु ल्युडादीनामिति भावः । अनुनासिकवचनादिति । तत्र ल्युडादीनामपि अनु-

---

उ.] विभागो गरीया'निति भावः । [ कृञः श च ] ।

इच्छा । शे यगभाव इति । भावार्थकत्वाद्यकः प्राप्तिः । [ इच्छा ] ।

षिद्भिदा । ननु गुहा न गिरिरत आह–गिरिशब्द इति [ षिद्भिदा ] ॥

ण्यास । भाष्ये न पुनरादेरिति। एवञ्च पाक्षिकाऽनिष्टप्रसङ्ग इति भावः। यत्तु प्रथमाऽतिक्रमे कारणाऽभावादादेरेव स्यादिति तन्न ; तन्न्यायस्याऽत्र शास्त्रेऽनङ्गी-कारात् । अत एव 'आद्युदात्तश्चे'ति सार्थकम् । अत एव 'तित्स्वरित'मिति तव्या-दावन्तस्वरितसिद्धिरिति बोध्यम्। अन्त्यस्येति। आदेस्तु 'आद्युदात्तश्चे'त्यनेन सिद्ध

---

१ भाष्यवार्त्तिकमित्यन्ये । भाष्यमित्यपरे । इदं क्वचिन्न । २ नां निपातनं कर्त्तव्यं' । ३ इदं लुप्तं । ४ भाष्यमिदमित्यन्ये । ५ 'इत्येव हि वर्त्तते' ।

'सिद्धं तु युवोरनुनासिकवचना'दिति ॥*॥ युच्प्रकरणे घट्टि[घटि]वन्दिविदिभ्य उपसङ्ख्यानम् ॥*॥ युच्प्रकरणे घट्टि[घटि]वन्दिविदिभ्य उपसङ्ख्यानं कर्तव्यम् । घट्टना । [ घटना ] । वन्दना । वेदना ॥*॥ इषेरनिच्छार्थस्य ॥*॥ इषेरनिच्छार्थस्येति वक्तव्यम् । अन्विष्यते अन्वेषणा ॥*॥ परेर्वा ॥*॥ परेर्वेति वक्तव्यम् । अन्यां परीष्टिं चर । अन्यां पर्येषणां चर ॥[ ण्यासश्रन्थो ] ।

**रोगाख्यायां ण्वुल्बहुलम् ॥३।३।१०८॥**

॥*॥ धात्वर्थनिर्देशे ण्वुल् ॥*॥ धात्वर्थनिर्देशे ण्वुल्वक्तव्यः । का नामाऽऽसिकाऽन्येष्वीहमानेषु । का नाम शायिकाऽन्येष्वधीयानेषु ॥*॥ इक्श्तिपौ धातुनिर्देशे ॥*॥ इक्श्तिपावित्येतौ प्रत्ययौ धातुनिर्देशे वक्तव्यौ । पचेर्ब्रूहि, पचतेर्ब्रूहि ॥*॥ वर्णात्कारः ॥*॥ वर्णात्कारप्रत्ययो वक्तव्यः। अकारः इकारः ॥*॥ रादिफः ॥*॥ रादिफो वक्तव्यः । रेफः ॥*॥मत्वर्थाच्छः ॥*॥ मत्वर्थाच्छो वक्तव्यः । मत्वर्थीयः ॥*॥ इणजादिभ्यः ॥*॥ इणजादिभ्यो वक्तव्यः । आजिः आतिः आदिः ॥*॥ इञ्वपादिभ्यः ॥*॥ इञ्वपादिभ्यो वक्तव्यः । वापिः वासिः । वादिः ॥*॥ इक्कृष्यादिभ्यः ॥*॥ इक्कृष्यादिभ्यो

---

प्र.]नासिकत्वप्रतिज्ञानसामर्थ्याद्ग्रहणं भविष्यतीत्यर्थः । [ ण्यासश्रन्थो युच् ] ।

रोगाख्या । धात्वर्थनिर्देश इति । क्रियानिर्देश इत्यर्थः । इक्श्तिपाविति । बहुलवचनात्तु क्वचिन्न भवति, श्तिपः शित्करणादकर्तृवाचिन्यपि तस्मिन् शबादयो भवन्ति । यद्यपि क्व चिद्भवति, यथा–'विभाषा लीयते'रिति । अत्र हि लीलीङोर्येका श्तिपि निर्देशः कृतः । श्यनि तु लीङ एव ग्रहणं स्यान्नु तु लीनातेः । वर्णादिति । वर्णवाचिनो वर्णानुकरणादित्यर्थः । बहुलवचनात् क्व चिन्न भवति,– 'अस्य च्वा'विति यथा । तथा क्व चिद्वर्णसमुदायानुकरणादपि-एवकार इति । कारप्रत्ययस्य ककारस्येत्संज्ञा प्रयोजनाऽभावान्न भवति । ननु करणं कारः, अस्य कारः अकार इत्येवं सिध्यति । नैतदस्ति । एवं हि विज्ञायमाने'ऽकारकरण'मित्यादि न

---

उ.]इति भावः । प्रतिज्ञानसामर्थ्यादिति।इदञ्च चित्त्वेऽपि तदनुबन्धकपरिभाषया ल्युटोऽग्रहणशङ्कावारणायाऽऽवश्यकमिति भावः । [ ण्यासश्रन्थो युच् ] ।

रोगाख्यायां। धातुकृतोऽर्थः साधनमिति भ्रमं वारयति–क्रियेति।भावाधिकारेऽपि कारकनिवृत्त्यर्थमिदम् । इक्श्तिपौ । क्वचिन्नेति । 'भुवो वुगित्यादौ । शित्करणादिति । शित्करणस्य पिवाद्यादेशविधानेन चारितार्थ्यादिदञ्चिन्त्यम् । तस्मान्निर्देशैरेव विकरणःसाध्यः।भाष्ये–पचेःपचतेरिति,–कर्मणः शेषत्वविवक्षायां षष्ठी। 'प्रयोगा'निति शेषो वा । धात्वर्थनिर्देशेऽप्येतौ बाहुल्कात् । अत एव 'ईक्षतेर्नाऽशब्दम्',

---

१ इदं क्वचिन्न । २ 'तेरन्वेष' । ३ इदं क्वचिन्न । ४ 'च' । ५ 'विवक्षया' ।

वक्तव्यः । कृषिः । किरिः । गिरिः ॥*॥ संपदादिभ्यः क्विप् ॥*॥ संपदादिभ्यः क्विब्वक्तव्यः । संपत् । विपत् । प्रतिपत् । आपत् । परिषत् । पर्षत्[1] ।

## कृत्यल्युटो बहुलम् ॥ ३।३।११३ ॥

॥*॥कृल्ल्युटः॥*॥कृल्ल्युट इति वक्तव्यम्[1]॥॥*॥कृतो बहुलमिति वा ॥*॥ कृतो बहुलमिति वा वक्तव्यं[2]। पादहारकाद्यर्थम्॥पादाभ्यां ह्रियते पादहारकः। गले चोप्यते गलेचोपकः । श्वोऽग्नीनाधास्यमानेन । श्वः सोमेन यक्ष्यमाणेन ॥

## गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥ ३।३।११९ ॥

॥*॥ गोचरादीनामग्रहणं प्रायवचनाद्यथा कषो निकष इति ॥*॥ गोचरादीनां ग्रहणं शक्यमकर्तुम् ॥ वञ्कस्मान्न भवति ?॥ 'प्रायवचनाद्यथा कषः निकष इति' । प्रायवचनात् [ कषो निकष इति ] घञ् न भवति ॥

## हलश्च ॥ ३।३।१२१ ॥

॥*॥ घञ्विधाववहाराधारावायानामुपसङ्ख्यानम् ॥*॥ घञ्विधाववहाराधारावायानामुपसङ्ख्यानं कर्तव्यम् । अवह्रियन्तेऽस्मिन्नवहारः । आध्रियन्तेऽस्मिन्नाधारः। एत्यैतस्मिन्वयन्त्यावायः । [ हलश्च ] ॥

## उदङ्कोऽनुदके ॥ ३।३।१२३ ॥

प्र.]सिध्येत्। कारप्रत्ययस्य 'कृदति'ङित्यधिकाराद्धात्वविहितत्वेऽपि कृत्संज्ञा। ततस्तदन्तस्य प्रातिपदिकत्वाद्विभक्त्युत्पत्तिः । एवं 'मत्वर्थीय' इति । अकारलोपस्त्वत्राऽभत्वेऽपि भाष्यकारवचनाद्बहुलग्रहणाद्वा। **संपदादिभ्य इति**। क्तिन्नपि बहुलवचनाद्भवति-संपत्तिरिति । [ रोगाख्यायां ] ।

**कृत्य । कृल्ल्युट इति**। कृत्यग्रहमपनीय कृद्ग्रहणं व्यापकत्वात्कर्तव्यं। तस्मिंश्च-कृते ल्युड्ग्रहणं न कर्तव्यं, तस्यापि कृत्त्वात्। **श्वोग्नीनिति** । अनद्यतनेपि लङ्भवति ।

**गोचरसंचर । प्रायवचनादिति** । 'हलश्चे'त्यत्र प्रायग्रहणानुवर्तनाद्घञः क्वचिदभावाद्ध एव भवतीत्यर्थः । [ **गोचरसंचर** ] ।

उ.]'आहो प्रभूतादिभ्यः''गच्छतौ परदारादिभ्य' इति प्रयोगाः सङ्गच्छन्ते । कृत्संज्ञेति । बाहुलकादित्यन्ये । **एवं मत्वर्थीय इति** । 'प्रातिपदिकत्वाद्विभक्त्युत्पत्ति'-रित्यनुषङ्गः। आर्द्धधातुकत्वाऽभावादतो लोपाऽप्राप्तेः स्वादित्वाऽभावेनाऽभत्वाद्यस्येति लोपाऽप्राप्तेश्चाह-**भाष्यकारेति** । बहुलग्रहणादिति सारम् । तदाश्रयणे भाष्यकारवचनं हेतुः। बहुव्रीहेः स्वार्थिकोऽयं छः।षष्ठीतत्पुरुषाद्गहादित्वाच्छेन कश्चित्साधयति।

हलश्च।भाष्ये-**एत्येति**।आङोऽर्थप्रदर्शनमिदम्।वेञ आत्वे 'आतो युगि'ति युक्॥

---

१ इदं क्वचिन्न । २ ॥*॥'कृतो बहुलमिति वक्तव्यं पादहारकाद्यर्थम्' ॥*॥ [ **कृतो बहुलमिति वक्तव्यं॥ किं प्रयोजनं ? ॥ 'पादहारकाद्यर्थम्'**]॥पा० ।

किमर्थमिदमुच्यते न 'हलश्चे'त्येव सिद्धम् ?॥अनुदक इति वक्ष्यामीति। इह मा भूत् । उदकोदञ्चनः ॥*॥ उदङ्कोऽनुदकग्रहणानर्थक्यं च प्रायवचना-द्यथा गोदोहनः प्रसाधन इति॥*॥ उदङ्कोऽनुदकग्रहणं चानर्थकम् ॥ घञ्कस्मान्न भवति ?॥['प्रायवचनाद्यथा गोहनः प्रसाधनः']प्रायवचनाद्घञ्न भवति । यथा गोदोहनः । प्रसाधन इति ॥ [ उदङ्कोऽनुदके ] ।

## खनो घ च ॥ ३।३।१२५ ॥

॥[*॥ खनो डडरेकेकवकाः ॥*]॥ डो वक्तव्यः। आखः। डरो वक्तव्यः । आखरः । इको वक्तव्यः । आखनिकः । इकवको वक्तव्यः । आखनिकवकः ॥

## ईषदुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल् ॥ ३।३।१२६ ॥

॥*॥ अजब्भ्यां स्त्रीखलनाः ॥*॥ अजब्भ्यां स्त्रीखलना भवन्ति विप्रतिषेधेन । अजपोरवकाशः–चयः लवः । स्त्रीप्रत्ययानामवकाशः–कृतिः हृतिः । इहोभयं प्राप्नोति–चितिः स्तुतिः । खलोऽवकाशः–ईषद्भेदः सुभेदः । अजपोः स एव । इहोभयं प्राप्नोति–ईषच्चयः सुचयः । ईषल्लवः सुलवः । अनस्याऽव-वकाशः–इध्मप्रव्रश्चनः । अजपोः स एव । इहोभयं प्राप्नोति–पलाशचयनः अविलवनः । स्त्रीखलना भवन्ति विप्रतिषेधेन ॥*॥ स्त्रियाः खलनौ विप्रतिषेधेन ॥*॥ स्त्रियाः खलनौ भवतो विप्रतिषेन । स्त्रीप्रत्ययानामवकाशः–कृतिः हृतिः। खलोऽवकाशः–ईषद्भेदः सुभेदः [सुलवः]। इहोभयं प्राप्नोति–ईषद्भेदा सुभेदा । अनस्यावकाशः–इध्मप्रव्रश्चनः । स्त्रीप्रत्ययानां स एव । इहोभयं प्राप्नोति–सक्तुधानी तिलपीडनी । खलनौ भवतो विप्रतिषेधेन ॥

## कर्तृकर्मणोश्च भूकृञोः ॥ ३।३।१२७ ॥

॥*॥ खल्कर्तृकर्मणोश्च्व्यर्थयोः ॥*॥ खल्कर्तृकर्मणो श्च्व्यर्थयोरिति वक्तव्यम् । अनाढ्येन भवता ईषदाढ्येन शक्यं भवितुम्–ईषदाढ्यंभवं भवता । दुराढ्यंभवम् । स्वाढ्यंभवम् । ॥*॥ कर्तृकर्मग्रहणं चोपपदसंज्ञार्थम् ॥*॥ कर्तृकर्मग्रहणं चोपदसंज्ञार्थं द्रष्टव्यम् । तद्द्वेष्यं विजानीयादभिधेययोरिति ।

---

प्र.] हलश्च । अध्यायसूत्रे आधारावायशब्दौ वार्तिके दर्शनादभियुक्तैः प्रक्षिप्तौ ।

उदङ्को । प्रायवचनादिति । घञ्वद्घोपि न भवतीति ल्युडेव भवति ॥

कर्तृ । च्व्यर्थयोरिति । तेनाऽभूततद्भावादन्यत्र खल्न भवति, आढ्येन

---

उ.] उदङ्को । घञ्वद्घोऽपीति । सति सूत्रे 'अनुदक' इति प्रतिषेधसामर्थ्यात्प्रत्याख्याने प्रायग्रहणादिति भावः । [ उदङ्कोऽनुदके ] ।

कर्तृकर्मणो।खल् न भवतीत्यस्योदाहरणमाह–आढ्येन सुभूयत इति॥खित्क-

---

१ इदं क्वचिन्न । २ इदं लुप्तम् । ३ 'द्वेष्यं' ।

तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे–'कर्तृकर्मग्रहणं चोपपदसंज्ञार्थ'मिति॥

**अन्येभ्योऽपि दृश्यते ॥ ३।३।१३० ॥**

॥*॥ भाषायां शासियुधिदृशिधृषिभ्यो युच् ॥*॥ भाषायां शासियुधिदृशि-भ्यो युज्वक्तव्यः। दुःशासनः। दुर्योधनः। दुर्दर्शनः। दुर्धर्षणः। ॥[*॥ मृषेश्च ॥*]॥ मृषेश्चेति वक्तव्यम्। दुर्मर्षणः। इति श्रीमद्भगवत्पतञ्जलिमुनिविरचिते व्याकरणमहाभाष्ये तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्।

**वर्तमानसमीप्ये वर्तमानवद्वा ॥ ३।३।१३१ ॥**

प्र.]सुभूयत इति। अत्र गतित्वात्सुशब्दस्य धातोः प्राक्प्रयोगः।'स्वाढ्यं भवं भवते'-त्यादौ खलः खित्करणसामर्थ्याद्धातोरनन्तरं कर्तृकर्मणी प्रयुज्येते। तदाचार्य इति। एतच्च खित्करणादनव्ययस्य मुमर्थाल्लभ्यते। चकारस्य सन्नियोगार्थत्वादीषद्दुस्सवो-ऽप्युपपदान्याश्रीयन्ते। [ कर्तृकर्मणोश्च ]।

अन्येभ्यो। भाषायामिति। छन्दसीत्यधिकाराद्भाषायां न प्राप्नोतीति वचनम्॥*॥इति०महाभाष्यप्रदीपे तृतीयस्याध्यायस्य तृतीये पादे प्रथममाह्निकम्॥*॥

वर्तमान सा। समीपमेव सामीप्यमिति स्वार्थे ष्यञं वर्णयन्ति। अन्ये समी-पस्य भावः सामीप्यं, वर्तमानस्य सामीप्यं वर्तमानसामीप्यमिति व्याचक्षते। ननु भूतभविष्यतोरनेन प्रत्ययानामतिदेशात्तयोरेव सामीप्यसंबन्धो न वर्तमानस्येति समा-साऽप्रसङ्गः।नैष दोषः। पारंपर्येण संबन्धसद्भावात्। अथाऽस्मिन् पक्षे 'गुणेन ने'ति षष्ठीसमासप्रतिषेधः कस्मान्न भवति?। अत्र केचिदाहुः–शौक्ल्यादीनां रूपादिविशे-

उ.]रणसामर्थ्यादिति। न च 'कुल्मुद्रुज' इत्यादिवद्व्यवहितेऽपि कृद्ग्रहणपरिभाषया सुम्प्रवर्त्तकत्वेन तच्चरितार्थमिति वाच्यं, भाष्यप्रयोगेणैव व्यवस्थाकल्पनादिति तत्त्वम्। बहुलग्रहणेनेत्यन्ये।दुःसवोऽप्युपपदानीति।समासस्तु पर्यायेणेति बोध्यम्॥

अन्येभ्यो। छदसीत्यधिकारादिति। 'छन्दसि गत्यर्थेभ्य' इत्यतः॥

॥*॥ इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्योते तृतीयाध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥*॥

वर्तमान॥ समीपमेवेति। कालप्रकरणात् कालेन सामानाऽधिकरण्यार्थमिति भावः। अत्राऽपि पक्षे षष्ठीसमास एव। समासाऽप्रसङ्ग इति। भूतभविष्यन्नि-रूपितं वर्त्तमानस्य यत्सामीप्यं तत्र वर्त्तमानवत्प्रत्ययाऽतिदेशोऽनर्थकः। ये हि वर्त्तमाने प्रत्ययास्ते समीपभूतेऽपि तस्मिन् सिद्धा एव, अतो वर्त्तमाननिरूपितं भूत-भविष्यतोर्यत्सामीप्यं तत्रेत्यर्थः स्वीकार्यः।तथा च वर्त्तमानपदेन समासाऽप्रसङ्ग इति भावः। सामीप्यसंबन्ध इति तृतीयातत्पुरुषः।सामीप्यनिरूपितः सम्बन्ध इत्यर्थः। सामीप्येनाऽऽश्रयतारूपः साक्षात्सम्बन्धस्तयोरेवेत्यर्थः। पारम्पर्येणेति। तत्र

वत्करणं किमर्थम् ? ॥ 'वर्तमानसामीप्ये वर्तमाने वे'तीयत्युच्यमाने वर्तमाने ये प्रत्यया विहितास्ते [ वा ] वर्तमानसामीप्ये धातुमात्रात्स्युः । वत्करणे पुनः क्रियमाणे न दोषो भवति ॥ यदि च याभ्यः प्रकृतिभ्यो येन विशेषेण[2] वर्तमाने प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषेण[2] वर्तमानसामीप्ये भवन्ति ततोऽमी वर्तमानवत्कृताः स्युः । अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यान्नाऽमी वर्तमानवत्कृताः स्युः॥ इह वर्तमानसामीप्ये वर्तमानवद्वेत्युक्त्वा लँडेवोदाह्रियते, यदि पुनर्वा लङ्वतीत्येवोच्येत ? ॥ अत उत्तरं पठति ॥*॥वर्तमानसामीप्ये वर्तमानवद्वचनं शत्राद्यर्थम् ॥*॥ वर्तमानसामीप्ये वर्तमानवद्वचनं क्रियते ॥ [किं प्रयोजनम् ?] । 'शत्राद्यर्थम्'। शत्राद्यर्थोऽयमारम्भः । एषोऽस्मि पचन् । एषोऽस्मि पचमान इति ॥ नैतदस्ति प्रयोजनम्। लडादेशौ शतृशानचौ, तत्र 'वा लङ्वती'त्येव सिद्धम्॥ यौ तर्हि-

प्र.]षाणां समासप्रतिषेध इति।अन्ये त्वाहुः,–अयमेव निर्देशो ज्ञापयति 'अनित्यःसमासप्रतिषेध' इति । अपरे ब्रुवते,–गुणशब्दस्य संबन्धिशब्दत्वाद्गुणाक्षिप्तस्य गुणिन एव समासप्रतिषेधः, न च वर्तमानः सामीप्यस्य गुणी, भूतभविष्यतोस्तद्गुणत्वात् । **वत्करणमिति** । 'वर्तमान' इत्येतावतैव वर्तमानसहचरितानां प्रत्ययानां सिद्धत्वादिति प्रश्नः । **धातुमात्रादिति** । वर्तमानग्रहणेन साहचर्यात्प्रत्ययानां रूपमात्रमेव लक्ष्येत, ततश्च सङ्करोपि स्यात्। यस्माद्धातोर्वर्तमाने यः प्रत्ययो विहितः स विशेषानुपादानाद्धात्वन्तरादपि स्यादित्यर्थः । **लडेवेति** । वृत्तिष्विति भावः । **शत्राद्यर्थमिति** । 'लटः शतृशानचा'वित्यनेन वर्तमानाधिकाराद्वर्तमानकालविहितस्यैव लटः शतृशानचौ भवतः,न तु कालान्तरविहितस्येति भावः। **लडादेशाविति** । लण्मात्रादेशौ । वर्तमानग्रहणस्य तत्रानपेक्षणादिति भावः। **यौ तर्हीति** । 'पूङ्यजोः शानन्'

उ.]समीपद्वारा सामीप्येन सम्बन्ध इति भावः।प्रतियोगितासम्बन्धेनाऽन्वयः। वर्त्तमानकालप्रतियोगिकसामीप्ये सतीत्यर्थ इत्यन्ये । 'भूतादौ वर्त्तमानसामीप्ये सति वर्त्तमानवत्प्रत्यया' इति वाच्योऽर्थः। एवञ्च तत्समीपे भूतादौ फलन्तीति बोध्यम् । **तद्गुणित्वात्** । सामीप्यगुणित्वादित्यर्थः । 'तद्गुणत्वा'दिति पाठे बहुव्रीहिः । अयमेव युक्तः पाठः । 'वर्त्तमान' इति प्रथमान्तेन 'वर्त्तमाने ये प्रत्यया' इत्यर्थः कथं लभ्यतेऽत आह–**सहचरितानामिति** । लक्षणयेति भावः । **रूपमात्रमिति** । न तूपाधिविशिष्टमित्यर्थः । वत्करणे तु 'वर्त्तमानेऽर्थे यथा भवन्ति तथा सामीप्येऽपि भवन्ती'त्यर्थान्न दोष इति भावः । **लण्मात्रेति** । मात्रशब्दः कार्त्स्न्ये । भाष्ये— **यौ तर्हीति** । शत्रानावित्यर्थः। नन्वयमपि वर्त्तमानसमीपभूतभविष्यतोर्विधीयमानः

१ इदं क्वचिन्न । २ 'विशेषणेन' । ३ किं लडेवो' । ४ इदं लुप्तम्' ।

लडादेशौ, एषोऽस्मि पवमानः एषोऽस्मि यजमान इति॥यौ चापि लडादेशौ तावपि प्रयोजयतः। वर्तमानविहितस्य लटः शतृशानचावुच्येते, अविशेषविहितश्चाऽयं योगः ॥ शत्राद्यर्थमिति खल्वप्युच्यते बहवश्च शत्रादयः एषोऽस्म्यलङ्करिष्णुः। एषोऽस्मि प्रजनिष्णुः ॥ [ वर्तमानसामीप्ये ] ॥

## आशंसायां भूतवच्च ॥ ३।३।१३२ ॥

आशंसा नाम भविष्यत्काला। ॥*॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः ॥*॥ आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः ॥*॥ न वाऽपवादस्य निमित्ताऽभावादनद्यतने हि तयोर्विधानम् ॥*॥ न वा वक्तव्यः ॥ किं कारणम् ? ॥ 'अपवादस्य निमित्ताऽभावात्'। नात्राऽपवादस्य निमित्तमस्ति ॥ कथम् ? ॥ अनद्यतने हि तयोर्विधानम् ॥ अनद्यतने हि तौ विधीयते लङ्लिटौ। न चाऽत्राऽनद्यतनः कालो विवक्षितः ॥ कस्तर्हि ? ॥ भूतकालसामान्यम्। ॥*॥ आशंसासंभावनयोरविशेषात्तद्विधानस्याऽप्राप्तिः॥*॥

प्र.]'ताच्छील्यवयोवचनशक्तिषु चानश्'इङ्धार्यादिभ्यः शतृ प्रत्यय इत्यर्थः।वर्तमानविहितस्येति। लट्स्म इत्यादिविहितलण्निवृत्त्यर्थमवश्यं तत्र वर्तमानग्रहणमपेक्षणीयमिति भावः। अविशेषविहित इति।वर्तमानलक्षणाद्विशेषादन्यस्मिन्विशेषे विहित इत्यर्थः।

आशंसायाम्। आशंसेति।आशंसा–अभिमतार्थवाञ्छा,सा वर्तमानापि विषयस्य भविष्यत्त्वाद्भविष्यत्कालेत्युच्यते।इह चाशंसातिदेशस्य विषयभावेनोपात्ता।'आशंसायां विषय आशंस्यमानक्रियावचनाद्धातोर्भूतवद्वर्तमानवच्च प्रत्यया भवन्ती'त्यर्थः संपद्यते।नवेति।अत्र सूत्रे भूतशब्देन भूतमात्रमुच्यते न तु तद्विशेषोऽनद्यतनस्तत्र सामान्यातिदेशो विशेषानतिदेश इति न्यायाल्लङ्लिटौ न भवत इत्यर्थः। आशंसासंभावनयोरिति। यद्यविशेषः कथं द्वन्द्वनिर्देश इति चेत्,शब्दस्वरूपाभिधायित्वाददोषः।

उ.]कथमविशेषविहित इत्यत आह–वर्त्तमानलक्षणादिति।भाष्ये–अयं योग इति। एतद्योगविहित इत्यर्थः। प्रयोजनान्तरमप्याह भाष्ये–शत्राद्यर्थमिति। इष्णुजादयोऽपि वर्त्तमान एव विधीयन्त इति भावः। सुत्रः शतुर्नेजिङश्चानशश्च सर्वकालत्वमुक्तं 'भूत' इति सूत्रे भाष्य इति चानशुक्तिः कैयटे चिन्त्या ॥[वर्त्तमान]॥

आशंसायां। सूत्रप्रयोजनं दर्शयति भाष्ये–आशंसा नामेति। आशंसाया भविष्यत्कालत्वं कथमत आह–आशंसेति। ननु भविष्यन्त्यामाशंसायामेव प्रत्ययः कस्मान्नेत्यत आह–इहं चेति। एवञ्च कालस्य सर्वत्र लकारप्रकृत्यर्थ एवाऽन्वयस्य क्लृप्तत्वान्नाऽऽशंसायां तदन्वय इति भावः। अपवादस्येति भाष्यस्य,–अपवादस्य निमित्तमुपादायाऽतिदेशाऽभावादित्यर्थः। तदाह–नाऽत्राऽपवादस्येति।निमित्तमुपात्त-

१ 'दनुदेशे'। २ इदं भाष्यमिति केचित्। ३ 'भूतसामान्यं'। ४ 'इहत्विति'।

आशंसासंभावनमित्यविशिष्टावेतावर्थौ । 'आशंसासंभावनयोरविशेषात्तद्विधानस्याप्राप्तिः' । आशंसायां ये विधीयन्ते ते संभावनेऽपि प्राप्नुवन्ति, ये च संभावने विधीयन्ते ते आशंसायामपि प्राप्नुवन्ति ॥ किं तर्ह्युच्यते 'अप्राप्ति'-रिति ? ॥ न साधीयः प्राप्तिर्भवति ॥ इष्टा व्यवस्था न प्रकल्पेत । न सर्वे सर्वत्रेष्यन्ते । ॥*॥ न वा संभावनावयवत्वादाशंसायाः ॥*॥ न वैष दोषः॥ किं कारणम् ? ॥ 'संभावनावयवत्वादाशंसायाः' । संभावनावयवात्मिकाऽऽशंसा । आशंसा नाम प्रधारितोऽर्थोऽभिनीतश्चाऽनभिनीतश्च । संभावनं नाम प्रधारितोऽर्थोऽभिनीत एव ॥*॥अर्थाऽसन्देहो वाऽलमर्थत्वात्संभावनस्य॥*॥ अथ वाऽर्थाऽसन्देह एव पुनरस्य ॥ किं कारणम् ?॥ 'अलमर्थत्वात्संभावनस्य' । संभावने आलमर्थ्यं गम्यते, आशंसायां पुनरनालमर्थ्यम्॥ आचार्यप्रवृत्तिर्ज्ञापयति संभावने[ऽप्ये]नालमर्थ्यं गम्यत' इति यदयं संभावनेऽलमित्याह । तस्मात्सुष्ठूच्यते 'न वा संभावनावयवत्वादाशंसाया'इति ॥ [ आशंसायां ] ।

प्र.]आशंसासंभावनयोरर्थभेदाऽभावादविशेष इत्यर्थः। आशंसा—अनागतवस्तुवाञ्छा। संभावनमपि भाविवस्तूत्प्रेक्षणमिति भावः। नवेति । अवयवशब्दः पृथग्भाववाची । संभावनात् पृथगेवाशंसेत्यर्थः । प्रधारितोऽर्थ इति । 'इदं मे भूया'दिति मनसा विषयीकृतोऽर्थः—आशंसाविषयत्वादाशंसाशब्देनाऽत्र उक्तः।अभिनीत इति। कारणयोग्यतावशाच्छक्यप्राप्तिरित्यर्थः। ततोन्योऽनभिनीत इत्यर्थः । अन्ये त्वप्रधारित इति पठन्ति । अनिर्धारितोऽवश्यंभावितया अनिश्चित इत्यर्थः।संभावनं चा'ऽसति विधुरप्रत्ययोपनिपाते भवितव्यमनेनार्थेनेति ज्ञान'मित्यनयोर्भेदः। यदयमिति। यदि संभावने

उ.]मस्तीत्यर्थः।ततः किमत आह—अत्रेति। कथं द्वन्द्वेति।'विरूपाणामपि समानार्थाना'मित्येकशेषारम्भादिति भावः । शब्देति । तस्य भिन्नत्वाद्भिन्नार्थत्वमिति भावः। उत्प्रेक्षणमिति । तदपीच्छाविशेष एवेत्यभिमानः । नन्वाशंसायाः सम्भावनाऽवयवत्वं बाधितमत आह—अवयवशब्द इति । प्राप्यत्वेन निश्चयविषयत्वरूपप्रधारितत्वस्याऽऽशंसाविषयेऽसम्भवादाह—मनसेति । सङ्कल्पात्मकेनेत्यर्थः। अनेनेच्छारूपता आशंसाया उक्ता । आशंसायाः प्रधारितार्थत्वाऽसम्भवादाह—आशंसाविषयत्वादिति । अनिश्चित इति । अत एवेच्छाविषयः । अनेनेच्छारूपता तस्या उक्ता । विधुरप्रत्ययो—विपरीतकारणम् । तेन सम्भावितस्यार्थस्य शक्यप्राप्तित्वं सूचितम् ।'सम्भावनं नामाऽप्रधारित' इति पाठे एककोट्यंशे उत्कटत्वेऽप्यन्यांशेऽनुत्कटज्ञानसत्त्वादनिश्चयरूपज्ञानविषयः । तेन ज्ञानरूपतोक्ता । 'प्रधारितोऽर्थ' इति पाठे अंशेऽवश्यभावित्वेन निश्चित इत्यर्थः । अभिनीत एवेति । शक्यप्राप्तिरि-

१ 'नामाऽप्रधारित' । २ 'मिति चेदित्याह' । ३ इदं क्वचिन्न । ४ 'इति' ।

## क्षिप्रवचने लृट् ॥ ३।३।१३३ ॥

॥*॥ क्षिप्रवचने लृट आशंसावचने लिङ्विप्रतिषेधेन ॥*॥ **क्षिप्रवचने लृट आशंसावचने लिङ्भवति विप्रतिषेधेन।** क्षिप्रवचने लृड्भवतीत्यस्याऽवकाशः—उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे। आशंसावचने लिङ् भवतीत्यस्यावकाशः—उपाध्यायश्चेदागतः आशंसे युक्तोऽधीयीय। इहोभयं प्राप्नोति—उपाध्यायश्चेदागतः आशंसे क्षिप्रमधीयीय। लिङ्भवति विप्रतिषेधेन ॥ ॥*॥अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्पन्नत्वात् ॥*॥ **अनिष्पन्ने निष्पन्नशब्दः शिष्यः—शासितव्यः ॥ किं कारणम्? ॥ 'अनिष्पन्नत्वात्'। देवश्चेद्वृष्टो निष्पन्नाः शालयः। तत्र भवितव्यं 'संपत्स्यन्ते शालय' इति** ॥*॥ सिद्धं तु भविष्यत्प्रतिषेधात् ॥*॥ **सिद्धमेतत् ॥ कथम्? ॥ 'भविष्यत्प्रतिषेधात्'। यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति। कश्चिदाह 'देवश्चेद्वृष्टः संपत्स्यस्यन्ते शालय' इति। स उच्यते 'मैवं वोचः, संपन्नाः शालय इत्येवं ब्रूहि'** ॥ ॥*॥ हेतुभूतकालसंप्रेक्षितत्वाद्वा ॥*॥ **हेतुभूतकालसंप्रेक्षितत्वाद्वा**

---

प्र.]नियमेनालमर्थो गम्येत तदा व्यभिचाराभावादलमिति विशेषणं नोपाददीतेत्यर्थः।

**क्षिप्रवच।** **अनिष्पन्न इति।** अनाशंसार्थमिदम्। **'वृष्टश्चे'**दित्यादि वस्तुस्वरूपकथनम्। **सिद्धंत्विति।** अप्शालिबीजसंयोग एव निष्पत्तिः। शालीनां तत्रैव निष्पत्तेर्वर्तनादिति भावः। **हेतुभूतकालसंप्रेक्षितत्वाद्वेति।** कारणसम्बन्धी कालः कार्यस्य व्यवस्थाप्यते कारणान्तरापेक्षाभावप्रतिपादनायेत्यर्थः। हेतुभूतस्य वर्षादेर्यः कालः स एव कार्ये संप्रेक्षितः, कारणस्यैव कार्यरूपतया विवक्षितत्वात्। कार्यकारण-

---

उ.]त्यर्थः। **ज्ञानमिति।** ज्ञानेच्छयोश्च भेदः स्पष्ट एवेत्यर्थः। तयोर्भेदे एकदेश्युक्तं युक्त्यन्तरमाह भाष्ये—**अर्थाऽसन्देहो वेति।** तयोरर्थाऽविशेषेऽप्यालमर्थ्याऽनालमर्थ्यकृतो भेद इति भावः। तद्दूषयति—**आचार्येति।** **नाऽऽलमर्थ्यमिति।** नियमेनाऽऽऽलमर्थ्यं न गम्यत इत्यर्थः ॥ [ **आशंसायां** ] ॥

**क्षिप्रव।** भाष्ये—**निष्पन्ने इति।** भविष्यति भूतप्रत्ययो वक्तव्य इत्यर्थः। **अनाशंसार्थमिति।** आशंसायां पूर्वेण भूतवदतिदेशाद्भविष्यत्यपि क्तः सिद्ध इति भावः। आशंसाऽभावं दर्शयति भाष्ये—**देवश्चेद्वृष्ट इति।** तदेवाह—**वस्तुस्वरूपेति।** न त्वस्याऽऽशंसाविषयतेति भावः। वृष्टौ जातायामेवं वादो लोकस्य। भाष्ये—**यल्लोक इति।** यल्लोको भविष्यत्प्रयोगं न मृष्यति तस्मान्न मुख्या निष्पत्तिर्निष्पदेरर्थः, किन्त्वन्य एवेत्यर्थः। तमेवाह—**अप्शालीति।** अयमेव निष्पत्तिपदार्थोऽभिमतस्तस्येति भावः। **शालीनामिति—पूर्वाऽन्वयि।** **तत्रैवेति।** अप्शालिबीज-

---

१ 'निष्पद्यन्ते' 'संपद्यन्ते' 'निष्पत्स्यन्ते'।

पुनः सिद्धमेतत् । हेतुभूतकालं वर्षं, वर्षकाला च क्रिया ॥ यदि तर्हि निष्पन्नोऽर्थः किं निष्पन्नकार्याणि न क्रियन्ते?॥ कानि ?॥ भोजनादीनि ॥ अन्यदिदानीमेतदुच्यते–'किं निष्पन्नकार्याणि न क्रियन्त'इति। यत्तु तन्निष्पन्नोऽर्थो न निष्पन्न इति स निष्पन्नोऽर्थः॥ अवश्यं खल्वपि कोष्ठगतेष्वपि शालिष्ववहननादीनि प्रतीक्ष्याणि । एवमिहापि निष्पन्नोर्थोऽवश्यं तु जननादीनि प्रतीक्ष्याणि ॥*॥ अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः, कर्तुर्विद्यमानत्वात् ॥*॥

---

प्र.]योरभेदाध्यवसायादित्यर्थः। भाष्यकारस्त्वेतदेव च वस्त्वन्यथा व्याचष्टे–हेतुभूतकालं वर्षमिति। हेतुभूतस्य हेतुत्वं प्राप्तस्य मेघादेर्यः कालः स एव वर्षस्य । वर्षस्य च यः कालः स एव निष्पत्तिक्रियाया इत्यर्थः। जननादीनीति । जननम्–अभिव्यक्तिः । एतदुक्तं भवति–विद्यमानोप्यर्थोऽनभिव्यक्तोर्थक्रियां न करोति । न चैतावता तस्याऽसत्त्वम् । कारणसामग्र्या कार्योत्पादानुमानात् । स्थूलेन तु रूपेणाभिव्यक्तोऽर्थक्रियां संपादयति । अस्त्यर्थानामिति । सत्तावाचिनामित्यर्थः । 'भवन्ती' शब्दो लटः पूर्वाचार्यसंज्ञा । कर्त्तुर्विद्यमानत्वादिति । ततश्च सत्ताया वर्तमानत्वं

---

उ.]संयोगरूपनिष्पत्तावेवाऽत्र प्रायो निःपूर्वकपदेर्वर्त्तमानत्वात्तद्वाचकत्वादित्यर्थः । निष्पदेरित्युपलक्षणं सम्पदेरपि।'निष्पत्ते'रिति पाठेऽप्ययमेवार्थः श्तिपा निर्देशात् । श्यन् तु कर्त्रर्थकत्वाऽभावान्न कृतः। यद्वा सत्कार्यवादे तत्रैव निष्पत्तेर्वर्त्तमानत्वम् । आद्यं व्याख्यानमेव युक्तम् ।भाष्ये–हेतुभूतेति। हेतुभूतस्य कारणत्वं प्राप्तस्य कारणस्य कालं कार्ये आरोप्य प्रयोग इत्यर्थः । तदारोपफलमाह–कारणान्तरेति । तेन चाऽवश्यभावित्वं फलति । कारणस्यैवेति । अपामप्युपादानकारणत्वादिति भावः ।

अन्यथेति। वृष्टेः प्रागपि मेघोत्पत्त्यनन्तरमीदृशप्रयोगस्य दर्शनात्तत्र च वृष्टेरपि वास्तवभूतत्वाऽभावात्तदुपपत्तिमपि दर्शयितुमिति भावः। मेघादेरिति । मेघाद्युत्पत्तेरित्यर्थः। तत्राद्यपक्षे शङ्कते–भाष्ये–यदि तर्हीति । अभिव्यक्तिरिति । स्थूलरूपेणाऽभिव्यक्तिरित्यर्थः । निष्पत्तिस्त्वत्राऽप्शालिबीजसंयोग एव, तत्राऽपि कार्यसत्त्वादिति भावः । तद्दर्शयति–एतदिति । कारणसामग्र्येति । ननु कार्यसमधिगम्यं सामग्रीत्वं, तथा च कार्याऽनुमाने इतरेतराश्रय इति चेन्न, वृद्धपरम्परया सामग्रीत्वग्रहात् । तेनाऽवश्यभावित्वेन कार्योत्पत्तावनुमितायां तत्र कारणकालारोपेण भूतप्रयोगेऽपि स्थूलरूपेणाऽभिव्यक्तिरूपमुख्यजननोत्तरमेव क्रियाकारित्वमिति भावः ॥ नन्वस्त्यर्थानामित्ययुक्तं, न ह्यस्तिः केषाश्चिद्धातूनामर्थोऽत आह–सत्तेति । अस्तेरर्थोऽर्थो येषामित्यर्थ इति भावः । कर्त्तुर्विद्यमानत्वेऽपि क्रियायाः कालत्रययोगदर्शनादाह–ततश्च सत्ताया इति। कर्तृसत्तयोः समनियतत्वादिति भावः। अवि-

---

१ 'कालवर्षं' । २ 'दानीमुच्य' ।

अस्त्यर्थानां भवन्त्यर्थे सर्वा विभक्तयः शासितव्याः। कूपोऽस्ति, कूपो भविष्यति, कूपो भविता, कूपोऽभूत्, कूप आसीत्, कूपो बभूवेति ॥ कथं पुनर्ज्ञायते भवन्त्या एषोऽर्थ इति ?॥ 'कर्तुर्विद्यमानत्वात्' ॥ कर्ताऽत्र विद्यते ॥ कथं पुनर्ज्ञायते कर्ताऽत्र विद्यत इति ? ॥ कूपोऽनेन कदा चिद्दृष्टो न चास्य किं चिदप्यपायं पश्यति। स तु तत्र बुद्ध्या नित्यां सत्तामध्यवस्यति,–कूपोऽस्तीति[1] ॥*॥ सिद्धं तु[2] यथास्वं कालसमुच्चारणात्॥*॥ सिद्धमेतत् ॥ कथम् ?॥ [ 'यथास्वं[3] कालसमुच्चारणात्' ]। यथास्वमेता विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति॥ कथं पुनर्ज्ञायते यथास्वमेता[4] विभक्तयः स्वेषु स्वेषु कालेषु प्रयुज्यन्त इति ? ॥*॥ अवात्वात् ॥*॥ यत्र वा भाष्यन्ते ॥*॥ असिद्धविपर्यासश्च ॥*॥ असिद्धश्च विपर्यासः। न हीह कश्चित्कूपोऽस्तीति प्रयोक्तव्ये 'कूपोऽभू[5]'दिति प्रयुङ्क्ते ॥ किं पुनः 'कारणं न वा भाष्यन्ते' 'असिद्धश्च विपर्यासः' ?॥ इह हि किं चिदिन्द्रियकर्म, किं चिद्बुद्धिकर्म। इन्द्रियकर्म समा-

प्र.]न तु भूतभविष्यद्रूपत्वमित्यर्थः। अवात्वादिति। अविकल्पितत्वादित्यर्थः। एतदेवाह–यत्र वा भाष्यन्त इति। एतदुक्तं भवति,–यदि वचनेन वर्तमाने लडादयो विधीयेरन् तदा लोके विकल्पेन प्रयुज्येरन्। 'कूपोऽभू'दिति प्रयोक्तव्ये 'कूपो भविष्यती'त्यपि प्रयुज्येत। तदेव दर्शयति–असिद्धविपर्यासश्चेति। इह किं चिदिति। इन्द्रियव्यापारकालस्य कूपसत्त्वं प्रति भेदकत्वेनाश्रयणात्तस्यापि तत्कालत्वमित्यर्थः। तदुक्तं हरिणा–'सतामिन्द्रियसंबन्धात्सैव सत्ता विशिष्यते। भेदेन व्यवहारो हि वस्त्वन्तरनिबन्धनः॥ अस्तित्वं वस्तुमात्रस्य बुद्ध्या तु परिगृह्यते। यः समासादनाद्भेदः स तत्र न विवक्षितः ॥' इति ॥

उ.]कल्पितत्वादिति। प्रयोगे इत्यर्थः। यत्र वेति। 'प्रयोगे' इति शेषः। वचनेन–'अस्त्यर्थाना'मिति वार्त्तिकेन। असिद्धविपर्यास इति भाष्येऽपि,–'लोके' इति शेषः। चो हेतौ।यतः शिष्टलोकानामसिद्धो विपर्यासो विपरीतः प्रयोगोऽतो न विकल्पेन प्रयुज्यन्तेऽन्यैरतोऽत्र यथाकालमेव प्रत्यया इत्यर्थः।किं पुनः कारणमिति।किं पुनः कारणं वा न भाष्यन्ते,किञ्च कारणं शिष्टानां विपर्यासाऽसिद्धिरिति भावः। वास्तवकालभेदस्याऽभावाद्वचनेनैव साधने प्राप्नोत्येव विपर्यासादिकमिति भावः। इन्द्रियव्यापारः–तत्प्राप्तिः। इन्द्रियपदेनाऽत्र कर्मेन्द्रियं। सतां वस्तूनामिन्द्रियसम्बन्धात्—तत्कृतप्राप्तिसंबन्धादेकैव सत्ता कालभेदमापद्यते। वस्त्वन्तरम्–इन्द्रियव्यापारः। तदेवाह–यः समासादनादिति। तत्र–बुद्धिकर्मव्यवसायविषये। वर्त्तमानेति। वर्त्तमाना-

१ 'कूपोऽत्रास्तीति'। २ 'यथास्वकालं समु'। ३ इदं लुप्तम्। ४ 'यथा स्वकालमेता'। ५ इदं क्वचिन्न'।

सादनं, बुद्धिकर्म व्यवसायः ॥ एवं हि कश्चित्पाटलिपुत्रं जिगमिषुराह 'योऽयमध्वा गन्तव्य आ पाटलिपुत्रादेतस्मिन्कूपो भविष्यति' ॥ अनद्यतने 'कूपो भविते'ति । समासाद्य 'कूपोऽस्ती'ति । समासाद्यातिक्रम्य 'कूपोऽभू'दिति । समासाद्यातिक्रम्योषित्वा 'कूप आसी'दिति । समासाद्यातिक्रम्योषित्वा विस्मृत्य 'कूपो बभूवे'ति । यदेन्द्रियकर्म तदैता विभक्तयो, यदा हि बुद्धिकर्म तदा वर्तमाना भविष्यैति ॥ [ क्षिप्रवचने लृट् ] ॥

## नाऽनद्यतनवत् क्रियाप्रबन्धसामीप्ययोः ॥ ३।३।१३५ ॥

किमर्थमिमौ द्वौ प्रतिषेधावुच्येते नाऽद्यतनवदित्येवोच्येत? ॥*॥ नाऽनद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधः ॥*॥ नानद्यतनवत्प्रतिषेधे लङ्लुटोः प्रतिषेधो द्रष्टव्यः ॥*॥ अद्यतनवद्वचने हि विधानम् ॥*॥ अद्यतनवद्वचने हि सति विधिरयं[3] विज्ञायेत ॥ तत्र को दोषः ? ॥*॥ तत्र लड्विधिप्रसङ्गः ॥*॥ तत्र लड्विधिः प्रसज्येत । ॥*॥ लुङ्लृटोश्चाऽयथाकालम् ॥*॥ लुङ्लृटोश्चाऽयथाकालं प्रयोगः प्रसज्येत । लुङोऽपि विषये लृट् स्यात्, लृटश्च विषये लुङ्

प्र.] नानद्यतन । तत्र लड्विधिप्रसङ्ग इति । अपूर्वविधानेऽद्यतने लटो दृष्टत्वाद्भूतभविष्यदनद्यतने प्रसङ्गः । लुङ्लृटोश्चेति । ननु वत्करणात्सादृश्यार्थात्संकरो न भविष्यति । नैतदस्ति । अप्राप्तप्रापणार्थत्वादतिदेशस्य भूतभविष्यच्छब्दोपादानेन लुङ्लृटोर्विधानेऽप्यद्यतने दृष्टत्वमात्रेणाऽयथाकालमपि प्रसङ्ग उच्यते।वत्करणं तु तदा विस्पष्टार्थमेव स्यात् । प्रतिषेधोपादाने तु वत्करणमनद्यतनविशेषविहितानामपि प्रतिषेधार्थम्। अन्यथा वत्करणमनर्थकं स्यात्,नानद्यतनइत्येव ब्रूयात्। तेन 'परोक्षे

उ.] र्थिकेत्यर्थः ॥ [ क्षिप्रवचने ] ।

नाऽनद्यतन । अपूर्वेति । अद्यतनशब्दोपादानेन कस्याऽपि विध्यभावात्तत्र दृष्टत्वमात्रेणाऽतिदेशो वाच्यः।तथा च भूतादिरूपेऽद्यतने लडपि स्यादिति भावः।भाष्ये-लुङ्लृटोरिति। भविष्यत्यद्यतने लुङ्, भूताद्यतने लृट् स्यादिति भावः। अप्राप्तेति । लुङ्लृटौ भूतभविष्यतोरद्यतने दृष्टौ, तत्राऽद्यतनवदित्युच्यमाने तस्मिन्नेवाऽद्यतने तयोरतिदेशोऽनर्थक इति कश्चिदंशस्त्याज्यः । तत्राऽद्यतनांऽशत्यागेनाऽतिदेशे भूताऽनद्यतने लुङ्, भविष्यति तत्र लृडिति प्रयोगसिद्धावपि 'अद्यतनव'दिति विरुध्येत । तस्माद्भूतांशपरित्यागेनाऽतिदेशे[4] आश्रीयमाणे यथाकालप्रसङ्ग इति भावः । भाष्ये-यथाप्राप्तमेवेति । स्वैरेव विधायकैः स्वेषु स्वेषु कालेषु भवन्तीति न संकरप्रसङ्ग इत्यर्थः । तेन परोक्षे इति । परन्त्वत्र मानं चिन्त्यम्, भाष्ये लुङ्लृटोरेवोपक्रमे उक्तेरिति दिक् ॥ [ नानद्यतनवत् ] ।

१ इतिः क्वचिन्न । २ 'भविष्यन्ति' । ३ 'विधानमिदम्' । ४ 'भूतांश' ।

## दृष्टं साम ।४।२।७।

॥ * ॥ दृष्टं साम कलेर्ढक् ॥ * ॥ 'दृष्टं सामे'त्यत्र कलेर्ढग्वक्तव्यः । कलिना दृष्टं साम-कालेयं साम गीयते । अपर आह–॥*॥ सर्वत्राऽग्निकलिभ्यां ढक् ॥*॥ सर्वत्राऽग्निकलिभ्यां ढग्वक्तव्यः । अग्निना दृष्टं साम-आग्नेयम् । अग्नौ भवमाग्नेयम् । अग्नेरागतमाग्नेयम् । अग्नेः स्वमाग्नेयम् । अग्निर्देवताऽस्याऽऽग्नेयः ॥ कलिना दृष्टं साम कालेयम् । कलौ भवं कालेयम् । कलेरागतं कालेयम् । कलेः स्वं-कालेयम् । कलिर्देवताऽस्य कालेयश्चरुः ॥

॥ * ॥ दृष्टे सामनि जाते चाऽप्यण्डिद् द्विर्वा विधीयते ॥ * ॥ दृष्टे सामनि जाते च अण् डिद् द्विर्वा वक्तव्यः । उशनसा दृष्टं साम औशनसम् । औशनम् । शतभिषजि जातः-शातभिषजः । शातभिषः । ॥ * ॥ तीयादीकक् ॥ * ॥ तीयादीकग्वक्तव्यः । द्वैतीयकः । तार्त्तीयीकः ॥ * ॥ न विद्यायाः ॥ * ॥ 'विद्याया न भवती'ति वक्तव्यम् ॥ द्वितीया विद्या तृतीया विद्येत्येव ॥ * ॥ गोत्रादङ्कवदिष्यते ॥ * ॥ [ गोत्रादङ्कवदिष्यते[1] ]॥ औपगवकम् । कापटवकम् ।

॥ * ॥ दृष्टे सामनि जाते चाऽप्यण् डिद्द्विर्वा विधीयते ।
तीयादीकग्न विद्याया गोत्रादङ्कवदिष्यते ॥ * ॥

## वामदेवाड्ड्यड्ड्यौ ।४।२।९।

---

प्र.] दृष्टं । कलिना दृष्टमिति । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाऽज्ञायि तत्तेन[2] दृष्टमित्युच्यते । सर्वत्रेति । सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यर्थः । जाते चेति । जातार्थे यो द्विरण्विधीयते–पूर्वं विहितो बाधकेन निवर्त्तितः पुनर्विधीयत इत्यर्थः,–स वा डिद्भवति । शतभिषजीति । शतभिषजा युक्तः काल इत्यण् । तस्य लुक् । ततो जातेऽर्थे प्राग्दीव्यतोऽणित्यण्विहितः कालाट्ठञिति ठञा बाधितः पुनः सन्धिवेलादिसूत्रेण विधीयते । तीयादीकगिति । अर्थाऽनिर्देशात्स्वार्थ एवेति ज्ञेयम् । न विद्याया इति । विद्यावाचिनो न भवतीत्यर्थः । गोत्रादिति । यथाऽङ्के गोत्रप्रत्ययान्तात्प्रत्ययः, एवं दृष्टे सामनीत्यर्थः । औपगवकमिति । 'गोत्रचरणाद्वु'ञिति वुञ् ॥

---

उ.] वद्भावाऽभावो ज्ञाप्यत इति भावः । यद्यपि तत्रैव फाल्गुनीत्यादिनिर्देशात्पूर्णिमायां न लुप्प्राप्तस्तथापि श्रवणेति निर्देशेन पूर्णिमालुम्निषेधेऽनित्यत्वस्य बोधनान्न दोषः ॥ ५ ॥

दृष्टं साम । ननु ऋग्विषयसाम्नो नित्यत्वात्कलिना दृष्टमित्यनुपपन्नमत आह–यस्य साम्न इति । ज्ञापित इत्यस्य–'प्रथमत' इत्यादिः । अज्ञायीति क्वचित्पाठः ॥ द्विरणित्यनेन योग्यतया जाते चेत्येवाऽन्वेतीत्याशयेनाह–जातेऽर्थे इति । 'दृष्टे सामनी'त्येतत्त्वणैव सम्बध्यत इति भावः । विद्याशब्दादीकको ऽप्राप्तेराह–विद्यावाचिन इति । वुञिति । अङ्के यो दृष्टस्तस्य सर्वस्यैवाऽतिदेशो न त्वङ्के आहत्यैव विहितस्येति भावः ॥

---

१ इदं व्याख्याभाष्यं न क्वाऽप्युपलभ्यते । २ 'ज्ञापितः' पा० ।

किमर्थो डकारः ? ॥ डितीति टिलोपो यथा स्यात् ॥ नैतदस्ति प्रयोजनं,-यस्येति लोपेनाऽप्येतत्सिद्धम् ॥ एवं तर्हि सिद्धे सति यद्यतौ डितौ करोति तज्ज्ञापयत्याचार्यो भवत एते परिभाषे-'अननुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणं' 'तदनुबन्धकग्रहणे नाऽतदनुबन्धकस्य ग्रहण'मिति ॥ किमेतस्य ज्ञापने प्रयोजनम् ? ॥ 'अवामदेव्य'मित्येतत्सिद्धं भवति ॥

॥ * ॥ सिद्धे यस्येति लोपेन किमर्थं ययतौ डितौ ? ।
ग्रहणं माऽतदर्थे भूद्वामदेव्यस्य नञ्स्वरे ॥ * ॥

## परिवृतो रथः ।४।२।१०।

॥ * ॥ परिवृतो रथ इति तदेकान्तग्रहणम् ॥*॥ 'परिवृतो रथ' इत्यत्र तदेकान्तग्रहणं कर्तव्यम् । 'येन परिवृतो रथो रथैकान्तश्चेत्स भवती'ति वक्तव्यम् । इह मा भूत्-'पुत्रैः परिवृतो रथः' 'छात्रैः परिवृतो रथ'इति ॥

तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥ कस्मान्न भवति-पुत्रैः परिवृतो रथश्छात्रैः परिवृतो रथ इति ? ॥ अनभिधानात् ॥ [ परिवृतो रथः ] ॥

## पाण्डुकम्बलादिनिः ।४।२।११।

अयं योगः शक्योऽवक्तुम् ॥ कथं पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिन इति ? ॥ इनिनैतन्मत्वर्थीयेन सिद्धम्-पाण्डुकम्बलोऽस्यास्तीति-पाण्डुकम्बली[ति] ॥ [ पाण्डुकम्बलादिनिः ]॥

## कौमाराऽपूर्ववचने ।४।१।१३।

---

प्र.] वामदेवा । अवामदेव्यमिति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमित्यर्थः । अन्यथा 'ययतोश्चातदर्थे' इत्यनेनाऽन्तोदात्तत्वं स्यात् । ग्रहणमिति । अतदर्थग्रहणेन सूत्रं लक्ष्यते । नञ्स्वर इति । नञाश्रयेऽन्तोदात्तत्वे विधीयमान इत्यर्थः॥ [वामदेवाड्ड्यड्ड्यौ]

परि । तदेकान्तग्रहणमिति । रथस्य चर्मवस्त्रादयोऽवयवा इति तद्वाचिभ्य एव प्रत्ययो भवतीत्यर्थः । अनभिधानादिति । पौत्रो रथ इत्यादावभिधानस्याऽभावादित्यर्थः ॥

पाण्डुकम्बला । इनिनैतदिति । अण्त्वनभिधानान्न भवतीति तद्बाधनार्थमपीदं न वाच्यमिति भावः ॥ [ पाण्डुकम्बलादिनिः ] ॥

---

उ.] वामदेवाड्ड्यड्ड्यौ । अत्रत्यं भाष्यं 'टिड्ढे'ति सूत्रे व्याख्यातम् ॥ [वामदेवात्] ॥९॥

परिवृतो रथः । अवयवा इति । अवयवा इवेत्यर्थः । संयुक्तचक्रादिवदत्राऽप्यवयवत्वबुद्धिरिति भावः ॥ [ परिवृतो रथः ] ॥ १० ॥

पाण्डुकम्बलादिनिः । नन्वसति सूत्रे पाण्डुकम्बलेन परिवृत इत्यर्थे पूर्वेणाऽण्स्यादत आह---अण्त्विति ॥ [ पाण्डुकम्बलादिनिः ] ॥ ११ ॥

---

१ 'डिति टेरिति लोपो यथा स्यात्' । २ 'एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य ग्रहणम्' पा० । ३ 'अवामदेव्यमित्येष स्वरो भवति' ।

॥ * ॥ कौमाराऽपूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे ॥ * ॥ **कौमाराऽपूर्ववचन इत्यत्रोभयतः स्त्रिया अपूर्वत्व इति वक्तव्यम्। अपूर्वपतिं कुमारीं पतिरुपपन्नः कौमारो भर्त्ता। कुमारी अपूर्वपतिः पतिमुपपन्ना–कौमारी भार्या ॥**

॥ * ॥ कौमाराऽपूर्ववचने कुमार्या अण्विधीयते।

अपूर्वत्वं यदा तस्याः, कुमार्यां भवतीति वा ॥ * ॥

**अथ वा कुमार्यां भवः कौमारः ॥ यद्येवं–कौमारी भार्येति न सिध्यति।** ॥ * ॥ पुंयोगात्स्त्र्यभिधानम् ॥ * ॥ **पुंयोगात्स्त्र्यभिधानं भविष्यति। कौमारस्य भार्या–कौमारीति ॥** [ कौमारापूर्ववचने ] ॥

## साऽस्मिन् पौर्णमासीति ।४।२।२१।

॥*॥ साऽस्मिन्पौर्णमासीति संज्ञाग्रहणम् ॥*॥ **साऽस्मिन्पौर्णमासीत्यत्र संज्ञाग्रहणं कर्त्तव्यम्।** ॥*॥ असंज्ञायां हि गरीयानुपसंयोगः [ मासार्द्धमासयोः संवत्सरपर्वणि ]। *॥ **अक्रियमाणे हि संज्ञाग्रहणे गरीयानुपसंयोगः कर्त्तव्यः स्यात्। 'मासार्द्धमासयो'रिति वक्तव्यं स्यात्,–इह मा भूत्–पौषी पौर्णमास्यस्मिन्पञ्चरात्रे दशरात्रे वेति। संवत्सरपर्वणीति च वक्तव्यं स्यात्–भृतकमासे मा भूदिति ॥**

---

प्र.] **कौमारापू। उभयत इति।** उभयस्मिन्नुभयतः। यदि कौमारीति स्त्रियां प्रयोगोऽथ कौमारः पतिरिति पुंस्युभयत्रापि स्त्रियाः पाणिग्रहणस्याऽपूर्वत्वे प्रयोगः कार्य इत्यर्थः। एतच्च निपातनसामर्थ्याल्लभ्यमेव वार्तिककृता प्रकाशितम्। **अपूर्वपतिमिति।** अविद्यमानः पूर्वः पतिर्यस्यास्तां प्राप्त इत्यर्थः। द्वितीयासमर्थात्कुमारीशब्दादुपयन्तर्यण्प्रत्ययः। स्त्रियान्तु स्वार्थे प्रत्ययः। **कुमार्यां भव इति।** रोगादिषु तु यद्यभिधानं नास्ति तदानभिधानात्प्रत्ययाभावः। **कौमारस्य भार्येति।** प्रत्यासत्त्या यैव तस्य कौमारव्यपदेशनिबन्धनं सैऽवाभिधीयते नाऽन्या। [ **कौमारापूर्ववचने** ] ॥

**साऽस्मिन्।** संज्ञाग्रहणं सूत्रेऽनार्षमिति वार्त्तिकमारब्धम्। **उपसंयोग इति।** उपसंयुज्यत इत्युपसंयोग उपाधिरुच्यते। अनेक उपाधिर्निर्देष्टव्यः स्यादित्यर्थः।

---

उ.] **कौमारा। उभयत** इत्यस्य–स्त्रियाः पुंसश्चेति नाऽर्थः, 'स्त्रिया' इति वाक्यशेषात्, उदाहरणविरोधाच्चात आह–**उभयस्मिन्निति।** तद्विवृणोति–**यदीत्यादि। पाणिग्रहणस्येति।** निपातनबललब्धमेतत्। तद्ध्वनयन्वक्ष्यति–**एतच्चेति।** सौत्राऽपूर्वशब्दो भावप्रधान इत्याह–**अपूर्वत्वे इति। उपयन्तरि**–विवोढरि। **स्वार्थे**–उपयमनविशिष्टे स्वार्थ इत्यर्थः। 'कुमार्याम्भवतीति वे'ति वार्त्तिकव्याख्यानं-**कुमार्याम्भव इति।** तस्याम्प्राप्त इत्यर्थः। तस्यां सम्बद्ध इति यावत्। **यद्यभिधानमिति।** इदञ्च सूत्रारम्भेऽप्यावश्यकमन्यथा तत्रापि स दुर्वारः। नन्वेवमन्यस्या अप्यभिधानं स्यादत आह–**प्रत्यासत्त्येति।** इदञ्च सूत्रारम्भेऽप्यावश्यकमन्यथा भवार्थमादायाऽतिप्रसङ्गो दुर्वार इति बोध्यम्॥ [**कौमाराऽपूर्व**] ॥ १३ ॥

**साऽस्मिन्पौर्णमासीति।** भाष्ये–**पञ्चरात्रे दशरात्रे** इति पाठः। **मासार्द्धमास-**

तर्त्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम्-इतिकरणः क्रियते-ततश्चेद्विवक्षा ॥

कस्येत् ।४।२।२५।

यस्येति लोपः कस्मान्न भवति ? ॥ इकारोच्चारणसामर्थ्यात् ॥ अथ यत्कायं हविः, कथं तस्य सम्प्रैषः कर्त्तव्यः ? ॥ यदि तावत्किमः कादेशः-'कस्मायनुब्रूही'ति भवितव्यम् । अथ न किमः-कायानुब्रूही'ति भवितव्यम् ॥ 'यद्यपि' किमोऽथाऽपि न किमः—उभयथा 'कस्मायनुब्रूही'ति भवितव्यं ।

प्र.] **संवत्सरपर्वणीति** । संवत्सरस्य द्वादश पर्वाणि मासान्तास्तत्र पर्वविशिष्टे मासे यथा स्यात्, भृतकमासे-पौष्या पौर्णमास्या तद्वति मासादिव्यपदेशभाजि पौषशब्दो मा भूदित्येवमर्थमित्यर्थः ॥ [ **साऽस्मिन्पौर्णमासीति** ] ॥

**कस्येत्** । **इकारोच्चारणसामर्थ्यादिति** । यदा कशब्दस्येकारस्तदाऽयं परिहारः । यदा तु किमो म[कार]स्येकारस्तदा लोपेऽपि कायमिति सिध्यति । यद्यपि कशब्दस्येत्त्वे कृते परत्वाद्वृद्ध्या लोपो बाध्यते-यथा श्रीर्देवता अस्य श्रायमिति; तथापि परिहारान्तरसद्भावादेतद्भाष्यकृता नोक्तम् । **अथेति**-कल्पकारविप्रतिपत्त्या संशयः । अध्वर्युणा होतुः सम्प्रैषः क्रियते । **यदि तावदिति** । किमो विभक्तौ कादेशं कृत्वा-कस्येति यदि निर्देशः कृत इत्यर्थः । किंशब्दश्च प्रश्नाक्षेपयोरिव प्रजापतौ वर्तते ।

**अथ नेति** । यदा कशब्दस्यैव कस्येति निर्देश इत्यर्थः । **सर्वस्येति** । सर्वार्थवाचिन

उ.] **योरि**ति च वार्त्तिकपाठः । **संवत्सरस्येति** । पूर्णिमान्तमानेन द्वादशमासात्मकस्य द्वादश पर्वाणि मासान्ता इत्यर्थः । **पर्वविशिष्टे**-पर्वपरिच्छिन्न इत्यर्थः । **माघाद्यव्यपदेशभाजी**ति पाठः । पौषमाघादिव्यवहाररहिते इत्यर्थः । क्वचित्तु **मासादिव्यपदेशभाजीति** पाठः । आदिनाऽर्द्धमासः । भाष्ये-**ततश्चेद्विवक्षेति** । ततः-प्रत्ययान्तादीदृशार्थविवक्षा चेत्तदा प्रत्यय इत्यर्थः [ **साऽस्मिन्पौर्णमासीति** ] ॥ २१ ॥

**कस्येत्** । **तदा लोपेऽपीति** । 'वार्णादाङ्ग'मितिन्यायेन दीर्घात्पूर्वं लोप इति भावः पुनर्यस्येति लोपस्तु न, पूर्वलोपस्याऽसिद्धत्वात्, स्थानिवत्त्वाद्वा । **वृद्ध्या लोप इति** वृद्ध्युत्तरन्तु तस्य प्राप्तिरेव नेति भावः । वृद्धेर्लोपस्य बलवत्त्वाश्रयेण भाष्यम्, अत एव किमः कायमिति सिध्यतीत्यन्ये । **कल्पकारेति** । श्रुतिविप्रतिपत्त्या संशय इत्यन्ये ।

ननु विभक्तौ विहितस्य कादेशस्य तद्धिते कथम्प्राप्तिरत आह-**किमो विभक्ताविति** । ननु किंशब्देन कथं प्रजापतिरुच्यतेऽत आह-**किंशब्दश्चेति** । **यदा कशब्दस्यैवेति** । अत्र 'न किम' इत्युक्त्या पूर्वपक्षिणा किमोऽपि निर्देशे दोषाऽभावस्य सूचितत्वेन सिद्धान्तिना नोक्तमेतत् । एवदुत्तरभाष्यं द्वयोरेकदेशिनोः प्रौढोक्तिपरम् । अत एव सनादिसूत्रस्थभाष्यविरोधो न, 'विश्वेषां देवाना'मिति प्रयोगविरोधश्च नेति बोध्यम् । ननु सर्वशब्दस्य

१ अयं पाठोऽद्य यावल्लुप्त आसीत्, अत्यन्तमावश्यकश्चेतिगौडैरुद्धृतः ।

**सर्वस्य हि सर्वनामसंज्ञा क्रियते सर्वश्च प्रजापतिः प्रजापतिश्च—कः ॥**

**अपर आह-"यद्येव किमोऽथापि न किमः-उभयथा 'कायानुब्रूही'ति भवितव्यम् । संज्ञोपसर्जनयोर्हि सर्वनामसंज्ञा प्रतिषिध्यते । संज्ञा चैषा तत्र भवतः ॥"** [ कस्येत् ] ॥

## अपोनप्त्रपांनप्तृभ्यां घः ।४।२।२७।

**अथ यदपोनप्त्रियमपांनप्त्रियं हविः कथं तस्य संप्रैषः कर्त्तव्यः ? ॥ अपोनपाते अनुब्रूहि, अपांनपाते अनुब्रूहि[इति] ॥ अपोनप्त्रपांनप्तृभावः कस्मान्न भवति ? ॥** प्रत्ययसंनियोगेन ऋकारान्तत्वमुच्यते । तेनाऽसति प्रत्यये **न भवितव्यम् ॥** [ अपोनप्त्रपांनप्तृभ्यां घः ]

## छ च ।४।२।२८।

॥ * ॥ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानम् ॥ * ॥ **छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसङ्ख्यानं कर्त्तव्यम् । पैङ्गाक्षीपुत्रीयम् । तार्णबिन्दवीयम् ॥** ॥ * ॥ शतरुद्राद्घ च ॥ * ॥ **शतरुद्राद्घप्रत्ययो वक्तव्यः । छश्च वक्तव्यः । शतरुद्रियम् । शतरुद्रीयम् ॥** [ **छ च** ] ॥ २८ ॥

## कालेभ्यो भववत् ।४।२।३४।

---

प्र.] इत्यर्थः । **सर्वश्चेति** । कार्यकारणयोरभेदादिति भावः । **प्रजापतिश्च क इति** । सर्वादिषु कशब्दस्याऽपाठेऽपि अन्वर्थसंज्ञाविज्ञानात्सर्वनामसंज्ञा भवति । गणपाठस्तु प्रपञ्चार्थः। येषां तु सकलं कृत्स्नमित्यादीनां सर्वनामसंज्ञा नेष्यते तेषां 'न बहुव्रीहा'वित्यत्र नेति योगविभागात्तदभावः । यागसंप्रदानं देवता । मन्त्रस्तुत्यश्चाऽर्थः। **संज्ञा चैषेति** । यद्येवं कादेशाभावात्कायेति किमो न सिध्यति । एवं तर्हि कस्येत्यत एव निपातनात्कादेशो भविष्यतीत्यदोषः । [ **कस्येत्** ] ॥

**अपो** । **अथेति** । वेदे क्वचिदपोनप्त्रे स्वाहेति ऋकारान्तः प्रयोगो दृश्यते, क्वचिदपोनपादपांनपादिति तकारान्तप्रयोग इति **प्रश्नः** । **प्रत्ययसंनियोगेनेति** । वेदे तुच्छान्दसत्वात्क चिदृकारान्तप्रयोगः ॥ [ **अपोनप्त्र** ]

---

उ.] संज्ञायामपि कथं 'क'शब्दस्येत्यत आह-**सर्वार्थेति** । भाष्ये-**सर्वश्च प्रजापतिः प्रजापतिश्च क इति** । अत एव 'सर्वं समाप्नोषि ततोसि सर्व'इति **गीतायामुक्तम्** । ननु ब्रह्मणः पूजायामविनियोगात्कथं देवतात्वमत आह-**यागसम्प्रेति** । **कादेशाऽभावादिति** । 'किमः क' इत्यत्र 'त्यदादीना'मित्यनुवृत्तेरिति भावः । **एवं तर्हीति** । एवञ्च 'अपर आहे'त्यस्य प्रौढित्वं सूचितम् [ **कस्येत्** ] ॥ २५ ॥

**छ च** । शतरुद्रिये शतशब्दोऽनन्तवाची । [ **छ च** ] ॥

---

१ 'अपांनप्त्रियं वा' पा० । २ 'प्रैषः' पा० ।

**कथमिदं विज्ञायते–भवे ये प्रत्ययाः विहितास्ते भवन्ति कालेभ्यः साऽस्य देवतेत्यस्मिन्नर्थे इति। आहो स्वित्कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति साऽस्य देवतेत्यस्मिन्नर्थे इति ? ॥ कश्चाऽत्र विशेषः ?** ॥ * ॥ कालेभ्यो भवे चेत्प्रत्ययमात्रप्रसङ्गः ॥*॥ **यदि विज्ञायते 'भवे ये प्रत्यया विहितास्ते भवन्ति कालेभ्यः साऽस्य देवतेत्यस्मिन्नर्थे' इति,–प्रत्ययमात्रं प्राप्नोति।**

॥ * ॥ यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः ॥ * ॥ **अथ विज्ञायते 'कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति साऽस्य देवतेत्यस्मिन्नर्थे' इति,–प्रातिपदिकमात्रात्प्राप्नुवन्ति।** ॥ * ॥ सिद्धं तूभयनिर्देशात् [ कालेभ्यो भववत्कालेभ्य इति ] ॥*॥ **सिद्धमेतत् ॥ कथम् ? ॥ उभयनिर्देशात्। उभयनिर्देशः कर्त्तव्यः– 'कालेभ्यो भववत्कालेभ्य' इति ॥ स तर्ह्युभयनिर्देशः कर्त्तव्यः ? ॥ न कर्त्तव्यः। 'भवव' दिति वतिनिर्देशोऽयम्। यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन भवे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषणेन साऽस्य देवतेत्यस्मिन्नर्थे भवन्ति ततोऽमी भववत्कृताः स्युः। अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यान्नाऽमी भववत्कृताः स्युः ॥** [ कालेभ्यो भववत् ] ॥

*महाराजप्रोष्ठपदाट्ठञ् ।४।२।३५।*

॥ * ॥ ठञ्प्रकरणे तदस्मिन्वर्त्तत इति नवयज्ञादिभ्य उपसङ्ख्यानम् ॥ * ॥ **ठञ्प्रकरणे तदस्मिवर्तत इति नवयज्ञादिभ्य उपसङ्ख्यानं कर्त्तव्यम्। नवयज्ञो वर्त्ततेऽस्मिन्काले[2] नावयज्ञिकः। पाकयज्ञिकः।** ॥ * ॥ पूर्णमासादण् ॥ * ॥ **पूर्णमासादण्वक्तव्यः। पूर्णमासो वर्त्ततेऽस्मिन्काले[3] पौर्णमासी तिथिः॥** [महाराजप्रोष्ठ]

*पितृव्यमातुलमातामहपितामहाः ।४।२।३५।*

**पितृव्यमातुलेति किं निपात्यते ?** ॥*॥ पितृमातृभ्यां भ्रातरि व्यड्डुलचौ[4] ॥*॥

---

**प्र.] काले। कथमिति।** कालेभ्य इति सकृच्छ्रवणाद्भवेन वाऽभिसंबन्धः स्यात् साऽस्यदेवतेत्यनेन वेति **प्रश्नः। प्रत्ययमात्रमिति।** 'दिगादिभ्यो य' दिति यत्प्रत्ययो भवे विहितः स कालवाचिभ्यः प्राप्नोतीत्यर्थः। **प्रातिपदिकमात्रादिति।** कालट्ठञिति ठञिन्द्रादेरपि प्राप्नोति। **सिद्धं त्विति।** वतिरतिदेशमात्रे चरितार्थ इति न सर्वसादृश्यं लभ्यत इति वार्त्तिककारो मन्यते। **वतिनिर्देशोऽयमिति।** कालेभ्यो भव इत्येव भवार्थे विहिताः प्रत्ययाः सिध्यन्तीति वतिनिर्देशः सर्वसादृश्यपरिग्रहार्थः कृतः। [ **कालेभ्यो** ]

---

**उ.] कालेभ्यो। सकृदिति।** आवृत्त्योभयाऽन्वयेऽपि ऋत्वादिभ्यो विहितोऽण् मुहूर्त्तादिभ्योऽपि स्यादित्यपि बोध्यम्। **इत्येवेति।** भवे इति सप्तम्यन्तम्। भवे ये प्रत्यया विहितास्ते कालवाचकेभ्य इत्यर्थः॥ [ **कालेभ्यो भववत्** ] ॥ ३४ ॥

---

१ नेदमिदानीं दृश्यते। २ 'नवयज्ञोऽस्मिन्काले वर्तते' पा०।
३ 'पूर्णमासोऽस्मिन्काले वर्त्तते' पा०। ४ 'व्यड्डुल' पा०।

**पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते। पितुर्भ्राता पितृव्यः। मातुर्भ्राता मातुलः ॥**

**मातामहपितामहेति किं निपात्यते ?** ॥*॥ मातृपितृभ्यां पितरि डामहच् ॥*॥ **मातृपितृभ्यां पितरि डामहच्प्रत्ययो निपात्यते। मातुः पिता–मातामहः। पितुःपिता–पितामहः।** ॥ * ॥ मातरि षिच्च ॥ * ॥ **[मातृपितृभ्यां मातरि डामहच्]षिच्च वक्तव्यः। [पितुर्माता] पितामही। [मातुर्माता]–मातामही** ॥ * ॥ महो वा छन्दस्यानङोऽवग्रहदर्शनात् ॥ * ॥ **महो वा पुनरेष भविष्यति। 'छन्दस्यानङोऽवग्रहदर्शनात्'। छन्दस्यानङोऽवग्रहो दृश्यते। माता–महः, पिता–मह इति** ॥ * ॥ अवेर्दुग्धे सोढदूसमरीसचः ॥ * ॥ **अवेर्दुग्धेसोढदूसमरीसच इत्येते प्रत्यया वक्तव्याः। अविसोढम्। अविदूसम्। अविमरीसम्।** ॥ * ॥ तिलान्निष्फलात्पिञ्जपेजौ ॥ * ॥ **तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ। तिलपिञ्जः। तिलपेजः** ॥ * ॥ पिञ्जः छन्दसि डिच्च ॥ * ॥ **पिञ्जः छन्दसि, डिच्च वक्तव्यः। तिलिपिञ्जं दण्डानतम् ॥** [ पितृव्यमातुलमातामह ] ॥

## *भिक्षादिभ्योऽण् ।४।२।३८।*

**किमर्थं भिक्षादिषु युवतिशब्दः पठ्यते, न 'तस्य समूह' इत्येव सिद्धम् ?॥ न सिध्यति–अनुदात्तादिलक्षणोऽञ्प्राप्नोति तद्बाधनार्थम्॥ अत उत्तरं पठति–** ॥ * ॥ भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् ॥ * ॥ **प्रत्ययविधौ भिक्षादिषु युवतिग्रहणमनर्थकम् ॥ किं कारणम्?॥ 'पुंवद्भावस्य सिद्धत्वात्'। प्रत्ययविधौ पुंवद्भावोऽत्र भविष्यति–'भस्याऽढे तद्धिते पुंवद्भवती'ति ॥** ॥*॥ सिद्धश्च प्रत्ययविधौ ॥ * ॥ **स च सिद्धः प्रत्ययविधौ ॥** [ भिक्षादिभ्योऽण् ] ॥

---

प्र.] **पितृव्यमातुल। महो वेति।** पितृशब्दस्यानङादेशो निपात्यते महच्च प्रत्ययः। तेन पदसंज्ञायां सत्यां पितेत्यवग्रहो भवति, डामहचि न स्यात्। **अविसोढमिति।** षत्वं सकारोच्चारणसामर्थ्यान्न भवति, अन्यथा षोढप्रत्ययं प्रक्रियालाघवार्थं कुर्यात्। एवं दूस-मरीसयोरपि षत्वाभावः सकारस्य। **तिलपिञ्ज इति।** तिलो धान्यविशेषः। फलरहित इत्यर्थः॥ **भिक्षा। पुंवद्भावेऽति।** पुंवद्भावे सत्याद्युदात्तत्वादण्सिद्ध इत्यर्थः। **सिद्धश्चेति।** पूर्वं पुंवद्भावः पश्चात्प्रत्यय इत्यर्थः। ॥ [ **भिक्षादिभ्योऽण्** ]

---

उ.] **पितृव्यमातुल।** भाष्ये–व्यनिति नित्, निरनुबन्धकस्तिद्धेति बहुदर्शिभिर्विचार्यम्। **षिच्चेति।** गौरादिगणे मातामहीशब्दपाठोऽनार्ष इति भावः। **डामहचि त्विति।** तत्र भत्वादिति भावः। **एवं दूसेति।** न च ण्यन्तात्क्विपि 'अविदू'रित्यादौ सकारस्य चारितार्थ्यम्; तेषामभिधाने दृढतरमानाऽभावादिति भावः। **फलरहित इति।** फलकाले फलरहित इत्यर्थः॥ [ **पितृव्यमातुल** ] ॥ ३६ ॥

---

१ अयं पाठः क्वचिन्नास्ति। २ 'भवन्तीति वक्तव्यम्' प्रा०। ३ 'युवतिग्रहणानर्थक्यम्' प्रा०।

## गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ४।२।३९।

॥ * ॥ वृद्धाच्च ॥ * ॥ वृद्धाच्चेति वक्तव्यम्। वृद्धानां समूहो वार्द्धकम्। ॥ * ॥ अञो वुञ्पूर्वविप्रतिषिद्धम् ॥ * ॥ अञो वुञ्भवति पूर्वविप्रतिषेधेन। अञोऽवकाशः–कपोत–कापोतम्। वुञोऽवकाशः–ग्लुचुकायनि–ग्लौचुकायनकम्। इहोभयं प्राप्नोति–औपगवकम्। कापटवकम्। वुञ्भवति पूर्वविप्रतिषेधेन॥

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः?॥ न वक्तव्यः–वक्ष्यत्येतत्–"पूर्वोऽपि वुञ्परमञं बाधते"इति। अथ वा इष्टवाची परशब्दः–'विप्रतिषेधे परं यदिष्टं तद्भवती'ति॥ * ॥ ठक्तु विप्रतिषेधात्[1] ॥ * ॥ ठक्तु भवत्यञो विप्रतिषेधेन। ठकोऽवकाशः–सक्तु–साक्तुकम्। अञः स एव। इहोभयं प्राप्नोति–आपूपिकम्। शाष्कुलिकम्। मौदकिकम्। ठग्भवति विप्रतिषेधेन॥ [गोत्रोक्षोष्ट्रोरभ्रराजराजन्य]॥

## केदाराद्यञ्च ।४।२।४०।

॥ * ॥ गणिकायाश्च ॥ * ॥ 'गणिकायाश्चे'ति वक्तव्यम्। गणिकानां समूहो गाणिक्यम्॥ [ केदाराद्यञ्च ]॥

## ब्राह्मणमाणववाडवाद्यन् ।४।२।४१।

किमर्थं ब्राह्मणादिभ्यो यन्विधीयते न यञ्प्रकृतस्सोऽनुवर्तिष्यते, नह्यस्ति विशेषो ब्राह्मणादिभ्यो यनो वा यञो वा—तदेव रूपं स एव स्वरः?॥ एवं तर्हि सिद्धे सति यद्ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति॥ किमेतस्य ज्ञापने प्रयोजनम्?॥ यन्प्रकरणे पृष्ठादुपसङ्ख्यानं चोदयिष्यति तन्न वक्तव्यं भवति॥ * ॥ यन्प्रकरणे पृष्ठादुपसङ्ख्यानम्॥ * ॥ यन्प्रकरणे पृष्ठादुपसङ्ख्यानं कर्त्तव्यम्। पृष्ठानां समूहः पृष्ठ्यः षडहः॥

## ग्रामजनबन्धुभ्यस्तल् ।४।२।४३।

प्र.] गोत्रो। कापोतमिति। 'लघावन्ते द्वयोश्च बह्वषो गुरु'रितिमध्योदात्तत्वादनुदात्तादिः कपोतशब्दः। सक्तुशब्दस्तुन्प्रत्ययान्तत्वादाद्युदात्तः। शष्कुलीशब्दो ङीपन्तोऽन्तोदात्तत्वादनुदात्तादिः॥ [ गोत्रोक्षोष्ट्रोरभ्र ]॥

---

उ.] भिक्षादिभ्योऽण्। पुंवद्भावे सतीति। कनिन्प्रत्ययान्तत्वादिति भावः। ननु प्रत्यये सति तन्निमित्तं भत्वमिति कथमण्प्रत्ययोऽत आह–भाष्ये–सिद्धश्चेति॥ ३८॥

गोत्रोक्षो। आद्युदात्त इति। अत एव 'अचित्ते'ति ठकोऽयमवकाश इति भावः॥

ब्राह्मणमाणव। भाष्ये–तदेव रूपमिति। नपुंसकत्वाद्यञश्चेत्यत्राऽपत्यग्रहणाच्च न स्त्रियां विशेषः, वृद्धत्वाच्च न वृद्धिकृतो विशेषः, योगविभागसामर्थ्याच्च ठञो न सम्बन्धः, चाऽनुकृष्टत्वाच्च न वुञ इति भावः। [ ब्राह्मणमाणव ]॥ ४२॥

---

१ 'विप्रतिषेधात्' पा०।

॥ * ॥ गजसहायाभ्यां च ॥ * ॥ 'गजसहायाभ्यां चे'ति वक्तव्यम् । गजता । सहायता ॥ * ॥ अह्नः खः ॥ * ॥ अह्नः खो वक्तव्यः । अह्नां समूहोऽहीनः । ॥ * ॥ क्रतौ ॥ * ॥ क्रताविति वक्तव्यम् । इह माभूत्-"आह्नाय धूतपाप्मानो भास्कराजितमृत्यवः" ॥ * ॥ पर्श्वाः सण् ॥ * ॥ पर्श्वाः सण्वक्तव्यः । पर्शूनां समूहः पार्श्वम् ॥ यदि सण्क्रियते इत्संज्ञा न प्राप्नोति ॥ एवं तर्हि णस् वक्तव्यः ॥ [ ग्रामजनबन्धुभ्यस्तल् ] ॥

## खण्डिकादिभ्यश्च ।४।२।४५।

खण्डिका । शुक । उलूक ॥ किमर्थं खण्डिकादिषूलूकशब्दः पठ्यते, नाऽनुदात्तादेरित्येव सिद्धम् ? ॥ न सिध्यति,-चाषोलूकयोश्छन्दस्याद्युदात्तः प्रयोगो दृश्यते-चाषेण किकीदिविना । यदुलूको वदति ॥ नैतयोश्छन्दसि सामूहिको दृश्यते यत्र च स दृश्यते तत्रैतावनुदात्तादी ॥

इदं तर्हि प्रयोजनम्—अयमौलूक्यो गोत्रन्तत्र गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् । एतदपि नास्ति प्रयोजनम्,—बहुवचनान्तानां हि सामूहिकः, बहुषु च लुक्, तत्र लुकि कृतेऽनुदात्तादेरित्येव सिद्धम् ॥ न सिध्यति । 'गोत्रेऽलुगची'त्यलुक् प्राप्नोति ॥ * ॥ अञ्सिद्धिरनुदात्तादेः

---

प्र.] ग्राम । आह्नायेति । खण्डिकादिषु दर्शनादहःशब्दादञ् , तदन्ताच्चतुर्थी ॥

खण्डि । तत्रैताविति । चाषशब्दः चषेर्ण्यन्तादच्यन्तोदात्तः । उलूकशब्दो लघावन्ते द्वयोश्चेति मध्योदात्तः । औलूक्यशब्दो गर्गादियञन्तः । बहुवचनान्तानामिति । द्वयोस्तु समूहव्यवहारो लोके प्रायो नास्तीति भावः । बहुषु चेति । 'यञञोश्चे'-त्यनेन । लुकि कृत इति । ननु लुक्यपि कृते प्रत्ययलक्षणेन गोत्रलक्षणो वुञ्पूर्वविप्रतिषेधेन प्राप्नोत्येव । एवं तर्हि परिहारान्तराभिधानात्तन्नोक्तम् । सामर्थ्याचौलूक्यशब्दार्थं उलूकशब्दस्य यञ्लुगन्तस्य पाठः । कृतयञ्लुक उलूकशब्दस्यानुकरणो गणे निर्दिष्टः । अञ्सिद्धिरिति । क्षुद्रकस्यापत्यानीति जनपदशब्दादितिविहितस्य तद्राजस्य लुक् । मालवात्तु वृद्धलक्षणस्य ञ्यङः । ततो द्वन्द्वः । ततः समासान्तोदात्तत्वेनानुदात्तादित्वमिति भावः ।

---

उ.] ग्रामजनबन्धु । क्रताविति । क्रतुवृत्तेरहञ्शब्दादित्यर्थः । एवञ्च सुत्यासमूहे रूढोऽहीनशब्द इति भावः ॥ [ ग्रामजनबन्धुभ्यस्तल् ] ॥ ४३ ॥

खण्डिकादिभ्यश्च । प्रत्ययलक्षणेनेति । इदमुपलक्षणं गोत्रार्थकादित्यर्थे लुक्यपि गोत्रार्थकत्वमक्षतमेवेत्यपि बोध्यम् । पूर्वविप्रतिषेधेनेति । वक्ष्यमाणेनेत्यर्थः । अद्यापि पूर्वविप्रतिषेधाऽज्ञानात्परिहारान्तरमुक्तमिति भावः । भाष्ये-अलुगिति । तत्र औलूक्यशब्दादणि आपत्यस्येति यलोपः । नन्वत्रोलूकग्रहणं, तत्कथमौलूक्यशब्दादस्य प्राप्तिरत आह-सामर्थ्यादिति । औलूक्यशब्दार्थ इति ।-प्रयोजनवाच्यर्थान्तम्प्रथमान्तम् । उक्तमेव विवृणोति-कृतेति । अनुकरण इति । अनुकरणभूतः शब्द इत्यर्थः । ञ्यङो

कोऽर्थः क्षुद्रकमालवात् ॥ * ॥ 'अनुदात्तादे'रित्येवाऽञ्सिद्धः, किमर्थं क्षुद्रकमालवशब्दः खण्डिकादिषु पठ्यते ? ॥ गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् ॥

॥ * ॥ गोत्राद्वुञ्न च तद्गोत्रम् ॥ * ॥ गोत्राद्वुञ्भवतीत्युच्यते न च क्षुद्रकमालवशब्दो गोत्रम् । न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते । तद्यथा-न जनपदसमुदायो जनपदग्रहणेन गृह्यते । काशिकोसलीया इति वुञ्न भवति ॥ तदन्तविधिना प्राप्नोति ॥ * ॥ तदन्तान्न स सर्वतः ॥ * ॥ परिगणितेषु कार्येषु [स[1]]तदन्तविधिः, न चेदं तत्र परिगण्यते ॥ * ॥ ज्ञापकं स्यात्तदन्तत्वे ॥ * ॥ एवं तर्हि ज्ञापयत्याचार्यो-'भवतीह तदन्तविधि'रिति ॥*॥ तथा[2] चापिशलेर्विधिः ॥ * ॥ एवं च कृत्वाऽऽपिशलेराचार्यस्य विधिरुपपन्नो भवति-'धेनुरनञि कमुत्पादयति' । धेनूनां समूहो धैनुकम् । अनञीति किमर्थम् ? ॥ अधेनूनां समूहः-आधेनवम् । ॥ * ॥ सेनायां नियमार्थं वा ॥ * ॥ अथ वा नियमार्थोऽयमारम्भः—क्षुद्रकमालवशब्दात्सेनायामेव ॥ क्व माभूत् ? ॥ क्षौद्रकमालवकमन्यदिति । ॥ * ॥ यथा बाध्येत वाऽञ् वुञा ॥ * ॥ अथवा ज्ञापयत्याचार्यः-पूर्वोऽपि वुञ्परमञं बाधत इति ॥ ननु चोक्तं-'गोत्राद्वुञ्न च तद्गोत्र'मिति ॥ तदन्तविधिना प्राप्नोति ॥ ननु चोक्तं-"तदन्तान्न स सर्वतः"

---

प्र.] अत्र च गोत्रेऽलुगचीति ञ्यङो लुक्प्रतिषेधादापत्यस्येति यलोपः । **न चेति** । चशब्दो ह्यर्थे । नहीत्यर्थः । **वुञ्न भवतीति** । 'अवृद्धादपी'त्यनेन । **तदन्तादिति** । 'तदन्ताद्वुञ् प्राप्नोती'ति यदुच्यते तन्न; यस्मात्स तदन्तविधिः सर्वत्र न भवति,-उगिद्वर्णग्रहणएव प्रत्ययविधौ तदन्तविधेरिष्टत्वात् । **भवतीहेति** । समूहप्रकरण इत्यर्थः । **एवं चेति** । तदन्तविध्यभावे ह्यनञिति प्रतिषेधोऽनर्थकः स्यादित्यर्थः । **आधेनवमिति** । 'तत्पुरुषे तुल्यार्थे'ति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादण् । अन्ये त्वाहुः-उत्सादित्वादञ् । तत्र हि 'बष्कयाऽसे'इति समासनिषेधात्तदन्तविधिरस्ति । जङ्गलधेन्वित्युत्तरपदस्य वा वृद्धिः । **नियमार्थं वेति** । 'वा'शब्दः समुच्चये । एवमथवेत्ययमपि । यदा सेनारूपः समूहस्तदाऽञ्प्रत्ययोऽन्यदा तु वुञेवेत्यर्थः । **ननु चेति** । 'ज्ञापकं स्या'दित्युक्तमपि चोद्य-

---

उ.] **लुक्प्रतिषेधादिति** । क्षुद्रकादिहिताऽञस्तु नाऽलुक्, अजादौ प्राग्दीव्यतीये विवक्षिते तदव्यवहितस्यैवाऽलुग्विधानादिति भावः । समुच्चयाद्यर्थस्याऽसम्भवादाह-**ह्यर्थ इति** । यद्यपि क्षुद्रकमालवो न लौकिकं गोत्रं, तथापि तत्त्वारोपो बोध्यः । **तदन्तादिति** । गोत्रान्तादित्यर्थः । **उगिद्वर्णग्रहण एवेति** । इदं तत्सूत्रस्थरोणीत्यादिवार्त्तिकानामुपलक्षणम् । **बष्कयाऽस इति** । बष्कयशब्दोऽसमासेऽञमुत्पादयतीत्यर्थः । न चाऽनञिति निषेधो न कार्यः, तदन्तविधिश्च मास्त्विति वाच्यं; गौधेनुकमित्याद्यसिद्धेः । ननु नियमार्थत्वे तदन्तविधेरज्ञापितत्वात् 'क्षौद्रकमालवकमन्य'दिति वुञ् कथमत आह-**वाशब्द इति** ।

---

१ अयं क्वाचित्कः पाठः । २ आपिशलिसूत्रमेतद्भाष्यकृतोद्धृतमिति ध्येयम् ।

इति ॥ * ॥ ज्ञापकं स्यात्तदन्तत्वे ॥ * ॥ **एवं तर्हि ज्ञापयत्याचार्यो–भवतीह तदन्तविधिरिति ॥ कथं पुनरेतदुभयं शक्यं ज्ञापयितुम्–'भवति च तदन्तविधिः, पूर्वश्च वुञ्परमञं बाधत–'इति ? ॥ उभयं ज्ञाप्यते ॥**

॥ * ॥ अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ * ॥ **अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायामिति वक्तव्यम् । क्षौद्रकमालवी सेना चेत् ॥ क्व मा भूत् ? ॥ क्षौद्रकमालवकमन्यदिति ॥**

[ ॥ * ॥ अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।
गोत्राद्वुञ्न च तद्गोत्रं तदन्तान्न स सर्वतः ॥
ज्ञापकं स्यात्तदन्तत्वे तथा चाऽऽपिशलेर्विधिः ।
सेनायां नियमार्थं वा यथा बाध्येत वाऽञ्वुञा ॥ * ॥ ]

## *पाशादिभ्यो यः ।४।२।४९।*

पाश । तृण । धूम । वात ॥

॥*॥ पृथग्वातादर्शनादसमूहः ॥*॥ **पृथग्वाताऽदर्शनादयुक्तोऽयं वातशब्दस्य सामूहिके पाठः। न हि पृथग्वाता दृश्यन्ते ॥ न तर्हीदानीमिदं भवति–वात्येति ?॥ भवति। शीघ्रत्वे तु । शीघ्रो वातो वात्या ॥ अथवा पृथग्वाता अपि दृश्यन्ते । तद्यथा–पूर्वो वातः। उत्तरो वातः । सर्वतो वातः । वाता वान्तु दिशो दश ॥**

## *खलगोरथात् ।४।२।५०। इनित्रकट्यचश्च ।४।२।५१।*

॥ * ॥ खलादिभ्य इनिः ॥ * ॥ **खलादिभ्य इनिर्वक्तव्यः। खलिनी । डाकिनी । कुटुम्बिनीति ॥** [ खलगोरथात् ] ॥

---

**प्र.]** परिहारायानूदितम् । **उभयमिति** । अन्यथानुपपत्त्या ज्ञापकत्वं भवत्युभयेन च विना क्षुद्रकमालवादञ्विधानं नोपपद्यते इत्युभयस्यापि ज्ञापकत्वमित्यर्थः । **अञ्प्रकरण इति** । यद्यपि गण एवैतत्पठ्यते तथापि क्षुद्रकमालवादिति योगविभागेनार्थद्वयं ज्ञाप्यं ततः सेनासंज्ञायामिति नियमः कर्त्तव्य इति दर्शयितुं वार्तिकारम्भः । [ **खण्डिकादिभ्यश्च** ] ॥

**पाशा । पृथगिति** । वातपरमाणूनामनेकत्वेपि वातसंज्ञकस्यावयविन एकत्वादनेकाश्रयरूपसमूहानुपपत्तिरित्यर्थः । **शीघ्रत्वे त्विति** । ततश्च वाताच्छैघ्र्य इति पृथग्वक्तव्यमित्यर्थः । **अथ वेति** । एकस्यापि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहो-

---

**उ.]**योगविभागेनोभयं सिध्यतीत्यर्थः। **चोद्यपरिहारायेति**–षष्ठीसमासः। अन्यतरज्ञापनेनैव चारितार्थ्यमिति चोद्यम्। **उभयस्याऽपि ज्ञापकत्वमिति** । उभयनिरूपितं ज्ञापकत्वमञ्विधानस्येत्यर्थः । 'त्व'रहितपाठस्तु युक्त एव। **यद्यपि गणे एवेति** । गणे क्षुद्रकमालवेत्येव पाठो वार्त्तिकबलादिति **साम्प्रदायिकाः** [ **खण्डिकादिभ्यश्च** ] ॥ ४८ ॥

**पाशादिभ्यो यः।** नतु वायुत्वस्याऽवयवाऽवयविसाधारण्यादनेकत्वमस्त्येवेत्यत आह–**वातेति । अनेकेति** । पूर्वपश्चिमोत्तरदक्षिणभेदेनेत्यर्थः । **तथेति** । औपाधिक एव दशे-

## विषयो देशे ४।२।५३।

॥ * ॥ विषयाभिधाने जनपदे लुब्बहुवचनविषयात् ॥ * ॥ **विषयाऽभिधाने जनपदे लुब्बहुवचनविषयाद्वक्तव्यः। अङ्गानां विषयोऽङ्गाः। वङ्गाः। सुह्माः। पुण्ड्राः** ॥*॥ गान्धार्यादिभ्यो वा ॥*॥ **गान्धार्यादिभ्यो वेति वक्तव्यम्। गान्धारः गान्धारयः। वासातः वसातयः। शैबः शिबयः** ॥*॥ राजन्यादिभ्यो वा वुञ् ॥*॥ **राजन्यादिभ्यो वा वुञ्वक्तव्यः। राजन्याः[1] राजन्यकः। दैवयातवाः[1] दैवयातवकः।** ॥*॥ बैल्ववनादिभ्यो नित्यम् ॥*॥ **'बैल्ववनादिभ्यो वुञ्नित्य'मिति वक्तव्यम्। बैल्ववनकः। आम्बरीषपुत्रकः। आत्मकामेयकः॥ तत्तर्हीदं बहु वक्तव्यम्?॥** ॥*॥ नवाऽभिधेयस्य निवासविषयत्वात् [निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः] ॥*॥ **न वा वक्तव्यम्॥ किं कारणम्?॥ 'अभिधेयस्य निवासविषयत्वात्'।**

---

**प्र.]** पपत्तिः। यथैकापि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते। तथा च दश दिश इति लोके व्यवहारः। यद्वा भिन्ना एव वाता अवयविनः पृथगुपलम्भात्॥ **[पाशादि]**॥

**विषयो। विषयाभिधान इति।** अङ्गानां निवासो जनपद इत्यतः स्वस्वामिभावो न प्रतीयते। अङ्गानां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते न तु निवासार्थ इति जनपदे लुबिति चातुरर्थिकस्य लुब्विधीयमानो विषये न प्राप्नोतीति वचनम्। **बहुवचनविषयादिति।** बहुवचनान्ताच्छब्दात्परस्य प्रत्ययस्येत्यर्थः। **गान्धार इति।** गान्धारस्यापत्यं गान्धारिः। तस्यापत्यानि–'साल्वेयगान्धारिभ्यां चे'त्यञ्[2]। ततो गान्धारीणां विषय इत्यण्। ततस्तस्य वा लुप्[3] 'लुपि युक्तव'दिति लिङ्गसंख्यातिदेशः। **राजन्या इति।** औत्सर्गिकस्याऽणो विषयाभिधान इति लुप्। वुञ्पक्षे तु तद्विधानसामर्थ्याल्लुबभावः। **न वेति।** जनपदलक्षणस्याभिधेयस्याङ्गादिसंबन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति। यद्यपि विषय-

---

**उ.]** त्यपि व्यवहार इत्यर्थः। **भिन्ना एवेति।** पूर्वादिवाताः स्वत एव भिन्ना इत्यर्थः। **पृथगुपलम्भादिति।** 'वात्यासमये' इति शेषः **[पाशादिभ्यो यः]**॥ ४९॥

**विषयो देशे।** ननु चातुरर्थिकलुपाऽप्यङ्गा इत्यादिविषये सेत्स्यत्यर्थाऽभेदादत आह– **अङ्गानामिति।** वृत्तौ त्वङ्गत्वेनैवाऽनेकव्यक्तिभानं बोध्यम्। 'गान्धारिभ्याचे'त्यञित्येतदुत्तरं 'लुक्, ततो गान्धारीणा'मित्येव **कैयटे** पाठः। मध्ये—"तद्राजत्वादञो लुक्, तस्य गोत्रेऽलुगचीत्यलुग्–"इत्यपपाठः। एवं 'ततस्तस्य वा लु'बित्युत्तरं 'लुपि युक्तव'दित्येव पाठः। मध्ये–"ततस्तद्राजान्तत्वादञो लु"गित्यपपाठः। एतेन 'एको गोत्रे' इति नियमादयमञ्यूनि वाच्यः, एवञ्च ततोऽपि परत्वाद्यूनि लुक् प्राप्नोति, अवश्यञ्च स एवेष्टव्यः, अन्यथा वैषयिकाऽणि लुप्यपि प्रत्ययलक्षणेन 'गोत्रेऽलु'गित्यस्य दुर्वारतया 'गान्धार'इत्यस्याऽसिद्धिरेव स्यादिति परास्तं, लुक्शब्देन तस्यैव ग्रहणात्। क्वचित्तु 'वेत्यञ्'। ततो 'गान्धा-

---

१ अत्रोदाहरणयोः क्रमे भेदः 'स' पुस्तके। २ अत्र 'ततस्तद्राजत्वादञो लुक्'इति पाठान्तरमस्ति 'क' पुस्तके। ३ 'ततस्तद्राजान्तत्वादञो लुक्' इत्यधिकः पाठोऽत्र 'क' पुस्तके।

यदभिधेयं स निवासश्च विषयश्च। 'अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुप्, विषयविवक्षायां [ प्रत्ययः' ॥ अभिधेयस्य निवासविवक्षायां लुब्विषयविवक्षायां ] प्रत्ययो भविष्यति ॥ इदं तर्हि प्रयोजनम्-एतज्ज्ञास्यामि-'इह नित्यो विधिरिह विभाषे'ति ॥ एतदपि नास्ति प्रयोजनं-यावता यदभिधेयं स निवासश्च विषयश्च। 'अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुब्विषयविवक्षायां प्रत्यय' इत्येव[2] ॥ [विषयो देशे]।

## सोऽस्यादिरिति छन्दसः प्रगाथेषु ।४।२।५५।

॥*॥ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् ॥*॥ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानं कर्तव्यम्। त्रिष्टुबेव त्रैष्टुभम्। अनुष्टुबेवाऽनुष्टुभम्। जगत्येव जागतम् ॥ [ सोऽस्यादिरिति ]।

## तदधीते तद्वेद ।४।२।५९।

किमर्थमिमावुभावर्थौ निर्दिश्येते, न योऽधीते वेत्त्यप्यसौ यस्तु वेत्त्यधीतेऽप्यसौ ॥ नैतयोरावश्यकः समावेशः। भवति हि कश्चित्संपाठं पठति न च वेत्ति कश्चिच्च वेत्ति न च संपाठं पठति ॥ [ तदधीते तद्वेद ]।

---

प्र.] निवासयोः परस्परव्यभिचारस्तथाप्यङ्गादीनां य एव स्वो विषयः स एव तेषां निवास इति स्मर्यते। तत्रैकस्योभयरूपत्वात्प्रयोगदर्शनवशादङ्गादौ निवासविवक्षैव गान्धार्यादिषु राजन्यादिषु च पर्यायेणोभयविवक्षा बैल्ववनादिषु विषयविवक्षैवाश्रीयत इति नार्थो लुब्विधिना[3], न तद्विकल्पेन न लुब्विकल्पेन, नापि विकल्पबाधनार्थेन नित्यवचनेनेत्यर्थः ॥

**सोऽस्यादि। छन्दस इति।** छन्दःशब्देनात्राक्षरेयत्ताविशेषवाचिनो गान्यादिशब्दग्रहणम्। **नपुंसकादिति।** नपुंसकार्थाभिधायिन इत्यर्थः। नपुंसकार्थाभिधायित्वं च त्रिष्टुबादीनां स्वार्थिकाऽण्प्रत्ययान्तानामेवेति नपुंसके स्वार्थ इत्युक्तं भवति ॥ **[सोऽस्या]॥**

**तदधीते। न य इति।** यो हि यं ग्रन्थमधीते स तं स्वरूपतोऽवश्यं वेत्ति यच स्वरूपतो वेत्ति सोऽवश्यमधीत इति भावः। **नैतयोरिति।** अर्थावबोधो वेदनमभिप्रेतं न

---

उ.] रीणामि'त्येव पाठः। 'वा लुप्' 'लुपि युक्तवदि'त्येव च पाठः। भाष्ये-**अभिधेयस्य निवासविषयत्वादिति।** निवासत्वाद्विषयत्वाच्चेत्यर्थः। नन्वत्र विषयस्यैवाऽभिधेयत्वादभिधेयस्योभयरूपत्वमसङ्गतमत आह-**जनपदेति।** नन्वेवमाङ्गा इत्यपि कदाचित्स्यादत आह-**तत्रैकस्येति।** भाष्येऽपि-'निवासविवक्षाया'मित्यादिना विवक्षानैयत्यमेव प्रतिपाद्यत इति बोध्यम्। **सोऽस्यादिरिति।** ननु त्रिष्टुबादीनां नपुंसकत्वाऽभावान्नपुंसकादित्यसङ्गतमत आह-**नपुंसकार्थेति।** ननु केवलत्रिष्टुबादीनां तत्त्वमपि नास्तीत्यत आह-**नपुंसकेति।** फलितमाह-**नपुंसके स्वार्थ इति।** कुटी कुटीर-इतिवत्स्वभावाद्भिन्नलिङ्गत्वम् ॥ **तदधीते। यो हीति।** वेदनम्-अधीयमानग्रन्थविषयमेवेति चोद्याऽभिप्राय इति भावः।

---

१ अयं पाठः क्वापि पृथङ्नोपलभ्यते। २ इत्येवेत्ययं पाठः क्वचित्कः। ३ 'विधानेन' पा०।

## क्रतूक्थादिसूत्रान्ताट्ठक् ।४।२।६०।

उक्थादीत्युच्यते कान्युक्थानि ?॥ सामानि ॥ यद्येवं सामगमात्रे[1] औक्थिक इति प्राप्नोति ॥ नैष दोषः-तादर्थ्यात्ताच्छब्द्यं भविष्यति-उक्थार्थमुक्थम् ॥ इह उक्थान्यधीते औक्थिको, यज्ञमधीते याज्ञिकः, य इदानीमौक्थिक्यं याज्ञिक्यं वाऽधीते कथं तत्र भवितव्यम् ?॥ औक्थिको याज्ञिक इत्येव भवितव्यम् ॥ कथम् ?॥*॥ तस्येदं प्रत्ययाल्लुक् ॥*॥ तस्येदं प्रत्ययाल्लुग्वक्तव्यः। तस्येदंप्रत्ययस्य च ॥ स तर्हि वक्तव्यः ?॥ न वक्तव्यः। इहास्माभिस्त्रैशब्द्यं साध्यम्-उक्थान्यधीते, औक्थिक्यमधीते, औक्थिक इति। तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यत्यविरविकन्यायेन। तद्यथा-अवेर्मांसमिति विगृह्याऽविकशब्दादुत्पत्तिर्भवत्यविक इत्येवमुक्थान्यधीत इति विगृह्य औक्थिक इति भविष्यति। औक्थिक्यमिति विगृह्य

प्र.] तु स्वरूपमात्रवेदनं, तत्र परस्परव्यभिचारदर्शनादुभयोपादानमित्यर्थः। **संपाठमिति**। अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः॥ [ **तदधीते तद्वेद** ]॥

**क्रतू। कान्युक्थानीति[2]**। उक्थशब्दो येषु सामसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते, यदधीयाने प्रत्यय इष्यते तत्रोक्थशब्दो न रूढ इति **प्रश्नः**। **उक्थार्थमिति**। सामलक्षणं प्रातिशाख्यं शास्त्रमित्यर्थः। मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते। तत्र वाक्यमेव भवति-उक्थान्यधीते वेद वेति। **इहेति**। उक्थशब्देन गौण्या वृत्त्या सामलक्षणमौक्थिक्यमुच्यते। **य इदानीमिति**। औक्थिकानामाम्नाय इतीदमर्थे 'छन्दोगौक्थिके'ति ञ्यः। **तस्येदंप्रत्ययादिति**। अध्येतृवेदित्रोरुत्पन्नस्याऽणो लुक्, आम्नाये विहितस्य ञ्यस्य

उ.] भाष्ये-न य इत्यत्र नञि काकुः। **यश्चेति**। अध्ययनं विना स्वरूपतो वेदनाऽसम्भवादिति भावः।'सम्पाठ'शब्दः कर्मणि घञन्त इत्याशयेनाह-**स्वाध्यायमिति। स्वाध्यायो** वेदः।५९।

**क्रतूक्थादि। नेष्यत इति**। अनभिधानादिति भावः॥ भाष्ये-**सामगमात्रे** इत्यस्य प्रातिशाख्याऽनध्येतरि सामगे इत्यर्थः। **यदधीयान इति**। प्रातिशाख्यमधीयाने इत्यर्थः। 'असामगेऽपी'ति शेषः। **सामलक्षणमिति**-षष्ठीतत्पुरुषः। भाष्ये-**य इदानीमिति**। औक्थिक्यमधीत इति विग्रहं करोति, **तत्र**-तादृशविग्रहे-कथं भवितव्यमित्यर्थः। **औक्थिकानामिति। औक्थिकाः**-प्रातिशाख्यविदः,तेषामाम्नायः-प्रातिशाख्यमेव॥ भाष्ये-**तस्येदंप्रत्ययादिति**-वार्त्तिके षष्ठ्यर्थे पञ्चमी। **तस्येत्य**स्याऽध्येत्राद्यर्थकप्रत्ययस्येत्यर्थः। तदाह-**अध्येत्रित्यादि। एकेन विग्रह इति**। विग्रह एवेत्यर्थः। **अपरस्मादुत्पत्तिरिति**। उत्पत्तिरपीत्यर्थः। **अविकशब्दादिति**। तस्मादेवेत्यर्थः। **औक्थिक इति**। इत्यपि भविष्यति वाक्यञ्चेत्यर्थः। तदाह-**वाक्यमेवेति**। 'उक्थान्यधीत इति विगृह्य 'औक्थिक इति भविष्यती'ति पाठः। अत्र शास्त्रे इककोऽभावात्स्त्रियां ङीबभावापत्तेः,

---

१ 'सामगातृमात्रे' इति 'स' पाठः। २ 'कानी'ति पा०।

**वाक्यमेव** ॥ * ॥ विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक्स्मृतः ॥ * ॥ [ **विद्यालक्षण-कल्पसूत्रान्तादकल्पादेरिकक् स्मृतः** ][1] विद्या-**वायसविद्यिकः । सार्पविद्यिकः । विद्या ॥** लक्षण-**गौलक्षणिकः । आश्वलक्षणिकः । लक्षण ॥** कल्प-**पाराशरकल्पिकः । मातृकल्पिकः**[2] ॥ कल्प ॥ सूत्र[3]-**वार्त्तिकसूत्रिकः । साङ्ग्रहसूत्रिकः ॥ अकल्पादेरिति किमर्थम् ? ॥ काल्पसूत्रः** ॥*॥ विद्या चानङ्गक्षत्रधर्मत्रिपूर्वा[4] ॥ * ॥ **विद्या चानङ्गक्षत्रधर्मत्रिपूर्वेति वक्तव्यम् । आङ्गविद्यः । क्षात्रविद्यः । धार्मविद्यः । त्रैविद्यः** ॥*॥ आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ॥*॥ **आख्यानाख्यायिकेतिहासपुराणेभ्यश्चेकवक्तव्यः** । आख्यान-**यावक्रीतिकः । प्रैयङ्गविकः । यायातिकः** । आख्यायिका-**वासवदत्तिकः सौमनोत्तरिकः** । आख्यायिका ॥ इतिहास पुराण-**ऐतिहासिकः । पौराणिकः** ॥*॥सर्वसादेर्द्विगोश्च लः ॥*॥ **सर्वसादेर्द्वि-**

**प्र.**] चेत्यर्थः । **विद्येति । इकगिति** । ठगित्यर्थः । 'अकल्पादे'रित्येतदानन्तर्यात्सूत्रान्तस्यैव कल्पादेर्निषेधं करोति । तथा च भाष्ये-'काल्पसूत्र' इति प्रत्युदाहृतम् । **अन्ये** तु-सर्वेषामेव निषेधमिच्छन्तः काल्पविद्य इत्यादि भाव्यमित्याहुः । तत्तु प्रथमातिक्रमे कारणादर्शनाद्भाष्यविरुद्धमिति लक्ष्यते । **त्रैविद्य इति ।** त्र्यवयवा विद्या-त्रिविद्या, तामधीत इति प्रत्ययः कार्यः । तिस्रो विद्या अधीत इति तु क्रियमाणे द्विगोर्लुगिति लुक्प्रसङ्गः । **आख्यानेति ।** द्वयोरर्थग्रहणं, द्वयोः स्वरूपग्रहणम् । **यावक्रीतिक इति ।** यावक्रीताधिकारेण कृतमाख्यानमुपचाराद्यावक्रीतशब्देनोच्यते, तदधीते वेद वा-यावक्रीतिकः । एवं प्रैयङ्गवाधिकारकृताख्यानाध्यायी-प्रैयङ्गविकः । **वासवदत्तिक इति ।** वासवदत्तामधिकृत्य कृताख्यायिका । अधिकृत्य कृते ग्रन्थ इत्यत्रार्थे वृद्धाच्छः । तस्य 'लुबाख्यायिकाभ्यो बहुल'मिति लुप् । ततोऽनेन ठक् । एवं सौमनोत्तरिक इति । **ऐतिहासिक इति ।** 'इतिह'शब्द उपदेशपारंपर्ये वर्तते । इति हास्यतेऽस्मिन्निति इतिहासः । 'हलश्चे'ति घञ् । मयूरव्यंसकादित्वात्समासस्ततष्ठक् । **सर्वसादेरिति ।** सच्छब्दोऽर्थवान् गृह्यत इति सर्वशब्दः पृथङ्नि-

**उ.**] 'आनुलुक'-इत्यसिद्धेश्चाह-**ठगितीति ।** ननु 'अकल्पादे'रित्यस्य प्रथमोपस्थितविद्यान्ताद्यपहाय सूत्रान्तोदाहरणदाने बीजाऽभावोऽत आह-**अकल्पादेरित्येतदिति । प्रथमाऽतिक्रमे इति ।** विद्या चानङ्गेत्यत्र 'त्रिपूर्वाऽपी'त्यनुक्त्या विद्यायामकल्पादेरित्यस्याऽसम्बन्धबोधनादिति वक्तुं युक्तम् । **द्वयोरर्थेति ।** व्याख्यानात् ,तथैव भाष्ये उदाहरणाच्चेति भावः ।

ननु यावक्रीतादयो नाख्याननामानीत्यत आह-**यावक्रीतेति । उपचारादिति ।** यवक्रीताऽपत्यत्वारोपादित्यर्थः । तदधिकारकृतत्वेन बोधे तु 'अधिकृत्य कृत' इत्यनेन छः स्यादिति बोध्यम् । **लुबिति ।** वासवदत्ताऽधिकारकृतत्वेन बोधादिति भावः । **आख्यायिकाभ्य इति ।** आख्यायिका अभिधातुं कृतस्य प्रत्ययस्य लुबित्यर्थः । बहुलग्रहणादाख्यानेऽपि लुबित्यन्ये । **इतिहास्यत इति ।** उपदेशपारम्पर्येणास्यते-निश्चयबुद्ध्या स्थीयतेऽ

१ लुप्तमिदं व्याख्याभाष्यमद्यत्वे । २ 'मात्रकल्पिकः' 'पारकल्पिकः' पा० । ३ 'सूत्रान्ते'ति पा० । ४ 'धर्मसंसर्गत्रिपूर्वा' पा० ।

गोश्च लो वक्तव्यः । सर्ववेदः । सर्वतन्त्रः । सवार्त्तिकः । ससङ्ग्रहः । पञ्चकल्पः । द्वितन्त्रः । द्विवेदः ॥

[॥॥ अनुसूर्लक्ष्यलक्षणे सर्वसादेर्द्विगोश्च लः । इकन्पदोत्तरपदाच्छतषष्टेः पिकन्पथः ॥॥]

## अनुब्राह्मणादिनिः ।४।२।६२।

अयं योगः शक्योऽकर्त्तुम् ॥ कथमनुब्राह्मणी अनुब्राह्मणिनौ अनुब्राह्मणिन इति ? ॥ इनिनैतन्मत्वर्थीयेन सिद्धम् । अनुब्राह्मणमस्याऽस्तीत्यनुब्राह्मणी ॥ [ अनुब्राह्मणादिनिः ] ।

## वसन्तादिभ्यष्ठक् ।४।२।६३।

अयुक्तोऽयं निर्देशः । अधीते वेदेति च वर्त्तते न च वसन्तो नामाऽध्ययनमस्ति ! ॥ नैष दोषः—साहचर्यात्ताच्छब्द्यं भविष्यति । वसन्तसहचरितमध्ययनं—वसन्तोऽध्ययनमिति । [ वसन्तादिभ्यष्ठक् ] ॥

## प्रोक्काल्लुक् ।४।२।६४।

अयुक्तोऽयं निर्देशः, प्रोक्तादिति भवितव्यम् ॥ सौत्रो निर्देशः॥ [प्रोक्ताल्लुक्]

---

प्र.] दिंष्टः। 'द्विगोश्चे'त्यनेन 'द्विगोर्लु'गिति स्मारितम्। **सर्ववेद इति**। सर्ववेदानधीत इत्यणो लुक्। **सवार्त्तिक इति**। वृत्तौ साधु वार्त्तिकम्। 'कथादिभ्यष्ठ'गिति ठक्। वार्त्तिकान्तमधीत इत्यन्तवचने सहस्याऽव्ययीभावः। 'अव्ययीभावे चाऽकाले'इति सभावः। ततोऽणो लुक्।

**पञ्चकल्प इति**। पञ्चकल्पानधीत इति द्विगुः। ततो 'विद्यालक्षणे'ति ठक्। तस्य लुक्। **अनुसूरिति**। अनुसूशब्दो ग्रन्थविशेषवाची, स ठकमुत्पादयति, लक्ष्यलक्षणशब्दौ चेत्यर्थः। अनुसू[स्त]मधीत इति ठक्। तस्य 'इसुसुक्तान्ता'दिति कादेशः। 'केऽण'इति ह्रस्वो वृद्धिश्च। तत आनुसुक इति भवति। लक्ष्यमधीते[इति]लाक्ष्यिकः। लक्षणमधीते लाक्षणिकः। **इकन्निति**। पूर्वपदमधीते—पूर्वपदिकः। शतपथमधीते शतपथिकः। शतपथिकी। षष्टिपथिकः। षष्टिपथिकी॥

**अनुब्रा। अयमिति**। अध्येतृवेदित्रोरनभिधानादण्न भविष्यतीति तद्बाधनार्थमपि सूत्रं न कर्त्तव्यम्॥ [ **अनुब्राह्मणादिनिः** ]॥

**वसन्ता। वसन्तसहचरितमिति**। यत्र वसन्तो वर्ण्यते यद्वा वसन्तेऽधीयते तत्साहचर्यात्ताच्छब्द्यं लभते॥ [ **वसन्तादिभ्यष्ठक्** ]॥

**प्रोक्ता। अयुक्त इति**। अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यासंभवा-

---

उ.] रिमन्नित्यर्थः। 'उपदेशपरम्परयाख्यानादीन्यस्यन्ते स्थाप्यन्तेऽत्रे'त्यर्थं **कश्चित्**। ननु 'सादे'—रित्येव सिद्धे सर्वग्रहणं व्यर्थमत आह—**सशब्द इति**॥ **ततोऽणो लुगिति**। तत्र सत्यव्ययीभावाऽर्थस्योपसर्जनत्वान्नाऽव्ययत्वमिति बोध्यम्। परस्परमनन्वयादाह—**अनुसूशब्द** इत्यादि। **अनुसूमिति**। 'अनुसू'मित्यव्युत्पन्नमिति यणभावः। क्वचित्तु—'अनुस्व'मिति पाठः। तदा अनुपूर्वात्सूतेः क्विबिति बोध्यम्। **लाक्ष्यिक इति**—यकारसहितः

## सूत्राच्च कोपधात् ।४।२।६५।

[ ॥*॥ सङ्ख्याप्रकृतेः ॥*॥ ] सङ्ख्याप्रकृतेरिति वक्तव्यम् । इह मा भूत्-माहावार्त्तिकः । [ चान्दनगन्धिकः ] । कालापकः [ सूत्राच्च कोपधात् ] ॥

## छन्दोब्राह्मणानि च तद्विषयाणि ।४।२।६६।

**किमर्थमिदमुच्यते ?** ॥ * ॥ अन्यत्राऽभिधेयस्याऽनित्यत्वाच्छन्दोब्राह्मणानां तद्विषयवचनम् ॥ * ॥ **अन्यत्राऽभिधेयमनित्यं भवति । पाणिनीयमिति वा भवति पाणिनीया इति वा । 'अन्यत्राऽभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानामप्य-**

---

**प्र.]** दिति भावः । **सौत्र इति ।** प्रोक्तशब्दस्येह स्वरितत्वं प्रतिज्ञातं, तेन तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥ **[ प्रोक्ताल्लुक् ]** ॥

**सूत्रा । सङ्ख्याप्रकृतेरिति ।** अष्ट अध्यायाः परिमाणमस्य । 'सङ्ख्याया अतिशदन्तायाः कन्'निति कन्प्रत्ययः । ततोऽष्टकमधीयते इत्यणो लुकि कृतेऽष्टकाः पाणिनीया इत्युदाहरणम् ॥

**छन्दो ।** इह प्रोक्तप्रत्ययान्तस्याऽनेकः प्रकारो दृश्यते,–स्वातन्त्र्यमुपाध्यन्तरयोगो वाक्यमध्येतृवेदित्रोः प्रत्ययश्च । स्वातन्त्र्यं तावद्यथा–पाणिनिना प्रोक्तं व्याकरणं पाणिनीयमिति । उपाध्यन्तरयोगो–महत्पाणिनीयमिति । वाक्यम्–पाणिनीयमधीयत इति । अध्येतृवेदित्रोः प्रत्ययः–पाणिनीया इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयतैवेष्यते न तु स्वातन्त्र्यादीति तद्विषयार्थमिदं सूत्रम् ॥ क्रियमाणेऽपि चैतस्मिन्नधीते वेदेत्यधिकाराद्ध्येतृवेदितृविषयस्य[3] वाक्यस्यैव निवृत्तिः सिध्यति न तु स्वातन्त्र्यादेरिति मत्वा पृच्छति–**किमर्थमिति । अन्यत्रेति ।** पाणिनीयादौ । **अभिधेयस्येति ।** प्रोक्तलक्षणस्यार्थस्य । **अनि-**

---

**उ.]** पाठः । षिकनः षित्त्वं ङीषर्थन्तदाह–**षष्टिपथिकीति ॥ [ क्रतूक्थादि ]** ॥ ६० ॥

**प्रोक्ताल्लुक् ।** किमत्राऽयुक्तमत आह–**अर्थस्येति ।** प्रोक्तेऽर्थे विहितादित्यर्थेऽपीदमसाधित्याह–भाष्ये–**प्रोक्तादिति ।** भाष्ये–**सौत्र इति ।** सौत्रत्वात्प्रत्ययाऽनुत्पत्तिरित्यर्थः । सौत्रत्वाद्वृद्ध्यभाव **इत्यन्ये । स्वरितत्वमिति ।** अस्य क उपयोगः, **अधिकारविहितेत्ये-**तत्पर्यन्तं व्याख्यानस्य च क उपयोग इति **चिन्त्यम्** ॥ **[ प्रोक्ताल्लुक् ]** ॥ ६४ ॥

**सूत्राच्च कोप ।** भाष्ये–**कालापक इति ।** कलापिना प्रोक्तमधीयते कालापास्तेषामाम्नायः कालापकम् । वुञ् । अत्राऽणो लुकि वुञ्निबन्धनमाद्युदात्तत्वं स्यात्, स्त्रियां ङीप्च न स्यादिति भावः । उदाहरणं भाष्ये नोक्तमिति स्वयमाह–**अष्टेति । [ सूत्राच्च ]** ॥६५॥

**छन्दोब्राह्मणानि ।** इदं सूत्रं नियमार्थमित्याह–**इह प्रोक्तेति । तद्विषयार्थमिति ।** अध्येतृवेदितृप्रत्ययविषयत्वार्थमित्यर्थः । नन्वेवं 'किमर्थ'मिति प्रश्नोऽनुपपन्नोऽत आह–**क्रियमाणेऽपीति ।** एवं यावदिष्टाऽसिद्ध्या प्रश्न इति भावः । ननु प्रोक्ते प्रागभावाऽप्रतियोगित्वे सति ध्वंसाऽप्रतियोगित्वरूपं नित्यत्वं नास्त्येवेत्यत आह–**नानेति । नित्यमिति ।** नित्यमध्येतृवेदित्रर्थनिरूपितविशेषणत्वेन प्रोक्तार्थस्याऽप्रयोगादित्यर्थः । भाष्ये–**पाणिनीया**

---

१ इदं वार्तिकं लुप्तमिति भाति । २ अयं पाठः क्वचिन्नास्ति । ३ 'प्रत्ययस्य' पा० ।

नित्यता प्राप्नोति। इष्यते च तद्विषयतैव स्यादिति। तच्चाऽन्तरेण यत्नं न सिध्यतीति च्छन्दोब्राह्मणानां तद्विषयवचनम्। एवमर्थमिदमुच्यते॥

अस्ति प्रयोजनमेतत्? ॥ किं तर्हीति॥*॥ तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥*॥ तत्र यथाधिकारं तद्विषयता प्राप्नोति॥ अधीते वेदेति वर्त्तते, तेनाऽध्येतृवेदित्रो-रेव तद्विषयता स्याद्येऽन्ये उपचारास्तत्र [तद्विषयता] न स्यात्। यथेह भवति-पाणिनीयं महत्सुविहितमित्येवमिहापि स्यात्-कटं महत्सुविहितमिति।

॥*॥ सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात्॥*॥ सिद्धमेतत्॥ कथम्?॥ प्रोक्ताधिकारे एव तद्विषयता वक्तव्या। 'तेन प्रोक्तं' 'छन्दोब्राह्मणान्यध्येतृ-वेदित्रो'रिति॥ तत्तर्ह्यध्येतृवेदितृग्रहणं कर्त्तव्यम्?॥ ननु चेहापि क्रियते॥ परार्थमेतद्भवति—तदधीते तद्वेदेति॥ एवं तर्हि यावदिह च्छन्दोब्राह्मणग्रहणं तावत्तत्राध्येतृवेदितृग्रहणम्॥ ननु च तत्रापि क्रियते॥ परार्थं तद्भविष्यति,-'पुराणप्रोक्तेषु ब्राह्मणकल्पेषु' 'शौनकादिभ्यश्छन्दसी'ति॥ इह वा छन्दो-ब्राह्मणग्रहणं क्रियते, तत्र वाऽध्येतृवेदितृग्रहणं-को न्वत्र विशेषः?॥

॥*॥ याज्ञवल्क्यादिभ्यः प्रतिषेधः॥*॥ याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः।

---

प्र.]त्यत्वादिति। नानाविषयत्वादध्येतृवेदित्रोर्नित्यं विशेषणत्वे नाऽप्रयोगादनियतत्वादित्यर्थः। **तत्र यथाधिकारमिति**। अधिकारमनतिक्रम्येत्यर्थः। अधीते वेदेत्यधिकारादध्येतृवेदित्रो-रेव विवक्षितयोस्तद्विषयता विधीयमाना तद्विषयमेव वाक्यं निवर्त्तयेन्न तु क्रियान्तरविषय-मित्यर्थः। **येऽन्य उपचारा इति**। व्यवहारा इत्यर्थः। **सिद्धं त्विति**। अध्येतृवेदित्रोरेव विवक्षितयोश्छन्दोब्राह्मणेषु प्रोक्तप्रत्यय उत्पद्यते नान्यत्रेत्येवं वक्तव्यमित्यर्थः। **परार्थं तदिति**। 'छन्दोब्राह्मणान्यध्येतृवेदित्रो'रिति परिभाषां कृत्वा 'पुराणप्रोक्ते' 'कल्पे चे'ति करिष्यते। चकारेण ब्राह्मणग्रहणमनुकृष्यते। ततः 'शौनकादिभ्य' इति। ततश्छन्दोग्रहणमनुवर्त्तिष्यत इति भावः। **याज्ञवल्कयानीति**। यज्ञवल्कस्यापत्यमिति गर्गादित्वाद्यञ्। तदन्ता-

---

उ.] इति॥ **वेति** वाशब्दश्चार्थे। नन्वध्येतृवेदितृविषयताया एव स्वीकारादध्येतृवेदित्रोरेव तद्विषयता स्यादिति कथमत आह-**तद्विषयमेव वाक्यमिति**। **क्रियान्तरमिति**। श्रवणा-दीत्यर्थः। भाष्ये-**येऽन्य उपचारास्तत्र [तद्विषयता] न स्यादिति**। अन्यथा व्यव-हारे प्रोक्तप्रत्ययान्तप्रयोगनिवृत्तिर्न स्यादित्यर्थः। तद्विषयता हि तन्निवृत्त्यर्थाऽपीति भावः।

**छन्दोब्राह्मणेष्विति**। अभिधेयेष्वित्यर्थः। अध्येत्राद्यर्थे विवक्षित एव छन्दोब्राह्मणार्थक-प्रोक्तप्रत्ययान्तानि प्रयोक्तव्यानीति भाष्यस्थवचनाऽक्षरार्थः। भाष्ये-**ननु चेहाऽपीति**। तदर्थकं 'तद्विषयाणी'त्येतदित्यर्थः। **परार्थमिति**। यत्परार्थं कृतं 'तदधीते तद्वेदे'ति,-तदनु-वृत्त्यैव सामान्येन नियमार्थताया 'अध्येतृवेदित्रो'रित्यनेन विनाऽपि सिद्धत्वादिति भावः।

**एवन्तर्हीति**। न्यासद्वयेऽपि समतेत्यर्थः। **ननु चेति**। छन्दोब्राह्मणग्रहणप्रयुक्तं गौरवं तुल्यमित्यर्थः। **परार्थमिति**। 'पुराणे'त्यादिसूत्रद्वये तदकरणाल्लाघवमित्यर्थः। इष्टाऽनुवृत्तिज्ञानं व्याख्यानात्सुलभमिति भावः। **को न्वत्रेति**। अत्रापि करणे लक्ष्याऽनुरोधेन सामान्याऽपेक्ष-

याज्ञवल्कानि ब्राह्मणानि। सौलभानि॥ किं प्रोक्ताधिकारे तद्विषयता क्रियत इत्यतो याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः?॥ नेत्याह–सर्वथा याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः॥ * ॥ इनिर्वा प्रोक्ते तद्विषयः ॥*॥ अथ वा 'इनिः प्रोक्ते तद्विषयो भवती'ति वक्तव्यम्॥ यदि–'इनिः प्रोक्ते तद्विषयो भवती'त्युच्यते एवमपि–पैङ्गी कल्पः–अत्रापि प्राप्नोति ॥*॥ काश्यपकौशिकग्रहणञ्च कल्पे नियमार्थम्॥ *॥ काश्यपकौशिकग्रहणं च कल्पे नियमार्थं द्रष्टव्यम्। 'काश्यपकौशिकाभ्यामेवेनिः कल्पे तद्विषयो भवति नान्येभ्य'इति॥

एवमपिच्छणादीनां तद्विषयता न प्राप्नोति–तैत्तिरीयाः, वारतन्तवीयाः॥ यदि पुनश्छणादयः प्रोक्ते तद्विषया भवन्तीत्युच्येत॥ एवमपि–पैङ्गी कल्पः–अत्रापि प्राप्नोति॥ काश्यपकौशिकग्रहणञ्च कल्पे नियमार्थमित्येव॥

एवमप्यौत्सर्गिकाऽणस्तद्विषयता न प्राप्नोति–क्रौडाः काङ्कताः मौदाः पैप्पलादाः॥ छणादयश्चाऽप्यौत्सर्गिकानध्येतृवेदित्रोरेव बाधेरन्, येऽन्ये उपचारास्तत्र न बाधेरन्–तित्तिरिणा प्रोक्ताः श्लोका इति॥

प्र.] त्प्रोक्तार्थे 'कण्वादिभ्यो गोत्रे' इत्यण्। अत्र तद्विषयता न भवति। **सौलभानीति**। सुलभेन प्रोक्तानीति,–'तेन प्रोक्त'मित्यण्। **सिद्धं त्वि**त्यस्यानन्तरं प्रतिषेधवचनात्तन्निमित्तत्वं प्रतिषेधवचनस्याशङ्क्य पृच्छति–**किं प्रोक्ताधिकार इति**। **इनिर्वेति**। **इनि**शब्देन णिनिरपि गृह्यते, 'कर्मन्दकृशाश्वादिनि'रित्ययमिनिरपि। तेनेनेरेव प्रोक्तार्थविहितस्य तद्विषयता भविष्यति न त्वण इत्यर्थः। **पैङ्गीति**। पिङ्गेन प्रोक्तः कल्प इति णिनिः। अत्रापि च्छन्दोब्राह्मणग्रहणेऽक्रियमाणे तद्विषयताप्रसङ्गः। **काश्यपकौशिकग्रहणं चेति**। 'इनिरध्येतृवेदित्रो'रिति परिभाषां कृत्वा'काश्यपकौशिकाभ्यां कल्प'इति सूत्रं नियमार्थं कर्त्तव्यमित्यर्थः। **एवमपीति**। इनेरेकस्योपादानात्तित्तिर्यादिसूत्रविहितानां छणादीनां तद्विषयता न स्यात्। **क्रौडा इति**। क्रोडेन प्रोक्तं छन्दोऽधीयते कङ्कतेन मुदेन पिप्पलादेनचेति। तेन प्रोक्तमित्यण्। तस्य छणादिष्वनन्तर्भावात्तद्विषयता न प्राप्नोति॥

दोषान्तरमुद्भावयति–**छणादय इति**। अध्येतृवेदितृविवक्षायामेव प्रोक्तार्थे उत्पद्य-

उ.] नियमस्य व्याख्यातुं शक्यत्वादिति भावः। एवं सूत्रन्यासः स्थापितः,तद्विषयताबलादेव च सुबुत्पत्तेः पूर्वमीदृशे विषये प्रत्यय इति 'शैलालिनो नटा' इत्यादौ न नलोपः। नन्विनिर्वेत्युक्ते 'काश्यपिन' इत्यादौ णिनिविषये तद्विषयता न स्यादत आह–**इनिशब्देनेति**। **नत्वण इति**। एवञ्च याज्ञवल्क्यादिभ्यः प्रतिषेधो न वक्तव्य इति भावः। ननु छन्दस्त्वाद्यभावात्कथं 'पैङ्गी कल्प' इत्यत्र तद्विषयताप्राप्तिरत आह–**छन्दोब्राह्मणेति**। तदभावादियमापत्तिरिति भावः। ननु तण्णिनिविधायकं, न तु तत्र 'कल्पे' इत्यस्ति तत्कथं नियमोऽत आह–**इनिरध्येत्रिति**। **परिभाषामिति**। नियमकारित्वात्तत्त्वम्। **अण्नेष्यत इति**। इदञ्चात्र भाष्ये, 'तित्तिरिवरे'ति सूत्रे च भाष्ये प्रत्ययान्ताऽनुपन्यासाज्ज्ञायते। **तर्हि**

१ 'औत्सर्गिकाणमध्येतृ'–इति पा०।

अस्तु तर्ह्यविशेषेण ॥ ननु चोक्तं–'याज्ञवल्क्यादिभ्यः प्रतिषेध'इति । वक्ष्यत्येतत्–'याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वा'दिति ।–तत्रैव वक्तव्यं 'तद्विषयता च न भवती'ति ॥

कथं–काश्यपिनः कौशिकिन इति ?॥ 'इनिः प्रोक्ते तद्विषयो भवती'त्युच्यमाने–अवश्यमत्र काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यं,–तदेवेदानीं विध्यर्थं भविष्यति ॥ कथं पाराशरिणो भिक्षवः शैलालिनो नटाः ॥ अत्रापि 'तद्विषयता चे'त्यनुवर्त्तिष्यते ॥ [ छन्दोब्राह्मणानि च तद्विषयाणि ] ॥

---

प्र.] मानाश्छणादयस्तत्रैव स्वयं भवन्त औत्सर्गिकान्बाधेरन् , अन्यत्र तु स्वयमभवन्तो न बाधेरन्नित्यर्थः ॥

तित्तिरिणा प्रोक्ता इति । 'तित्तिरिवरत'न्वित्यत्र छन्दोग्रहणं कर्त्तव्यमिति वक्ष्यते, तेनाऽत्र छण्न भवति । तदभावेऽप्यण्नेष्यते । यद्येवमपवादाभाव उत्सर्गस्य प्रवृत्तिः केननिवार्यते, अथाऽनभिधानादिकमुत्सर्गानुत्पत्तौ हेतुरभिधीयते तर्हि 'छणादयश्चापी'ति दोषो नोपन्यसनीय इति चिन्त्यमेतत् । अस्तु तर्हीति । इह वा 'छन्दोब्राह्मणानि च तद्विषयाणी'ति क्रियेत,–प्रोक्ताधिकारे वा 'छन्दोब्राह्मणान्यध्येतृवेदितृ'रित्युच्येत,–नास्ति विशेषः। इहापि च प्रकरणे प्रोक्तग्रहणाऽनुवृत्त्या प्रोक्तप्रत्ययान्तानां छन्दोब्राह्मणवाचिनां तद्विषयता विधीयमाना सर्वं स्वातन्त्र्यादि निवर्त्तयितुं क्षमेति यथाधिकारमित्ययं दोषो नाऽवतरति । 'सिद्धं तु प्रोक्ताधिकार'इत्येतदपि वार्त्तिकमत्रैव सूत्रे 'प्रोक्ताल्लु'गित्यतः प्रोक्तशब्दस्याऽधिकार इत्येवं केचिद्व्याचक्षते । वक्ष्यत्येतदिति । 'पुराणप्रोक्ते'ष्वित्यत्र । कथमिति । कल्पे तद्विषयता न प्राप्नोतीति प्रश्नः । अत्रापि तद्विषयता चेति । अर्थमात्रमत्र निर्दिष्टम् । तथा हि–यद्यत्र प्रकरणे सूत्रमिदं क्रियते तदा व्यवहितत्वात्कथं तत्रतद्विषयग्रहणस्यानुवृत्तिः स्यात् । अथ प्रोक्तप्रकरणे 'छन्दोब्राह्मणान्यध्येतृवेदितृ'रित्युच्यते तदा तद्विषयग्रहणं नास्ति । तस्मा-

---

उ.] च्छणादयश्चाऽपीत्यस्य 'अनभिधानान्नोत्पत्स्यन्ते' इति शेषः। चिन्त्यमिति । केचित्तु तित्तिर्यादिभ्यः प्रोक्ते छन्दस्येव प्रत्ययः, स च च्छणेवेति द्विविधनियमेन श्लोकेष्वणभाव इति भाष्याशयः । नियमद्वयस्याऽप्यध्येत्रर्थादिविवक्षायामेव प्रवृत्तावयं दोष इत्याहुः ।

भाष्ये–अस्तु तर्ह्यविशेषेणेति । इनिरूपविशेषमनुपादायेत्यर्थः । तादृशवचनश्चाऽत्र वा कर्त्तव्यम्, प्रोक्ताऽधिकारे वा,–न विशेष इत्याह–इह वेति । अत एव 'सर्वथा याज्ञवल्क्यादिभ्य' इति भाष्ये 'सर्वथे'त्युपात्तम् । प्रोक्तग्रहणाऽनुवृत्त्येति । इदं स्वरूपकथनम् ।

सर्वं स्वातन्त्र्यादीति । लक्ष्याऽनुसारिव्याख्यानादिति भावः । यद्यपि तदनुवृत्तिसामर्थ्यात्सर्वनिवृत्तिरिति कैयटस्वरसः, तथापि सामर्थ्यं कथमिति चिन्त्यम् । छन्दोब्राह्मणशब्दानां तद्विषयतावारणाय तदनुवृत्तेरावश्यकत्वादित्याहुः। केचिद्व्याचक्षते इति । अत्राऽरुचिस्तु भाष्याऽननुगुणत्वम् । भाष्ये-तुल्यकालत्वादिति । यत्र 'शाट्यायनिन' इत्यादाविष्यते तैस्तुल्यकालत्वेनाऽस्यापि पुराणप्रोक्तत्वाण्णिनिप्राप्तिरित्यर्थः । भाष्ये–अत्राऽपि तद्विषयता चेति । अपिना 'काश्यपे'त्यादिसूत्रे च । तस्मात्प्रोक्तप्रकरणे इति ।

